योगनिष्ठ शास्त्रविशारद् श्रीमद् बुद्धिसागरसूरीश्वरेभ्यो नमो नमः

श्री बुद्धिसागरसूरीश्वरग्रन्थमाला ग्रन्थाङ्क २

(विविधजैनग्रन्थोद्धृतः)

# जैनकथार्णवः

संग्राहकः

योगनिष्ठ–शास्त्रविशारद्–आचार्यभगवान् श्रीमद् बुद्धिसागरसूरीश्वरपट्टधर–शांतमूर्ति–आचार्यदेव
श्रीमत् कीर्तिसागरसूरीश्वरविनेयरत्न तपस्वी मुनिराज श्रीमद् जितेन्द्रसागरान्तिषद्
शांतमूर्ति पन्न्यास श्रीमत् कैलाससागरगणिवरः

प्रकाशकः–मुम्बापुरी नगरान्तर्गतकालिकादेवीमार्गस्थिताध्यात्मज्ञानप्रचारकमण्डल कार्यवाहकः–लल्लुभाइ करमचंद्र दलालः

विक्रमाब्द २००७ मूल्यम् पठनपाठनम् वीरनिर्वाणाब्द २४७७

# प्रास्ताविकम्

'जातस्य हि ध्रुवं मृत्युः' मृतस्य च स्वकृतानुसारेण गतिः इत्याद्यास्तिकभावनापरिप्लुतो भारतदेशो(आर्यमहाप्रजारूपः)ऽतएव तस्य संस्कृतिर्निवृत्तिप्रधाना.

स्वभुजाबलेन षट्खण्डसाधकचक्रवर्ती स्वकलाकौशलेनापरिमितवित्तसंग्राहको वणिक्, प्रचूरपरिश्रमेण विविधशास्त्र-संदर्भरहस्यवेत्ता विद्वान् विप्र इत्याद्यस्मिन् जगति ये केचिदुन्नतशिरसः ते सर्वेऽपि भारतीयार्यमहाप्रजासंस्कृतिप्लावितान्तकरणाः स्वजीवनसाफल्यं निर्वृत्तिमार्गप्राप्त्यैव मन्वाना विद्यन्ते.

यदा विज्ञानवादपरिकलिता आङ्ग्लभूम्यादिदेशा, वस्त्रपरिधानादिसंस्कारज्ञानरहिता आसन्, तस्मिन् कालेऽपि भारतवर्षीयाः कला-साहित्य—वाणिज्यादिविविधकलापरिनिष्ठिताः, सर्वसम्पत्तिसमन्विताः राज्यादिविविधसमृद्धित्यागेन विविधवनगह्वरादिपूनितस्थानेषु जीव-परभव-कर्मादि-विविधतत्त्वगवेषणां कुर्वन्तः, तपोध्यानादिशक्त्या निर्मुक्तजातिबद्धवैर-जीवसमूहपरिकलिता स्वपादविहारेण भारतवर्षं पुनाना आसन्. अतएव भारतीयार्यमहाप्रजा सर्वकलाक्रिया—व्यवहारे अध्यात्म-सौरभानुशीलनरता निर्वृत्तिप्रधानपरा च.

अध्यात्मभावनापरिकलिता भारतीयार्यमहाप्रजासंस्कृतिः संचालकभेदेन द्विविधा ब्राह्मण–संस्कृतिः श्रमण–संस्कृतिश्च, उपनिषद्–स्मृत्यादिविविधग्रन्थपरिभाविता ब्राह्मणसंस्कृतिः भारतवर्षीयवर्णाश्रम–गतव्यवहारशुद्धौ अतीवोन्नतोपकारकुशला द्विविधश्रमणवाहकैः श्रमणसंस्कृतिरपि द्विविधा जैनसंस्कृतिः बौद्धसंस्कृतिश्च.

बौद्धसंस्कृतिः कालप्रवाहेण विविधपरावर्तनेन परावर्तिता भारते जाता परिवर्द्धिताऽपि बहिर्देशेषु स्थिरीभूता, श्रमणसंस्कृतौ भारतवर्षे उत्पन्ना, स्थिरीभूता, परिवर्धिता केवला जैनसंस्कृतिरेव श्रमणसंस्कृतिः.

वसुधैव कुटुम्बकं मन्वाना निष्परिग्रहाः ब्रह्मव्रतधरा भैक्ष्यमात्रोपजीविनः सततं तत्वपरिशिलितान्तकरणाः श्रमणाः एव श्रमणसंस्कृतिमूलरूपाः. अस्या श्रमणसंस्कृत्याः प्रभावेणैव गगनचूंबितशिखरबद्धपताकाभिः 'यतो धर्मस्ततो जयः' इति सूत्रं सूचयन्तः भारतीयदानप्रवाहद्योतकाः देवप्रासादाः विविधविषयपरिकलिता ज्ञानभण्डाराश्च भारतवर्षीयसौरभरूपा विद्यन्ते.

श्रमणसंस्कृतेः प्रधानता अध्यात्मभावना, अध्यात्मभावना च न कदापि वैराग्यविरहिता. विषयवैमुख्यं च वैराग्यं. परिपूर्ण-तत्त्वज्ञानं विना विषयवैमुख्यं कदापि न भवति, अतएव तत्वज्ञानविचारणा उत्पत्ति–स्थिति–नाशतत्त्वत्रयविचारविस्ताररूपा-गमशास्त्रेषु अनेकविधा दर्शिता.

तत्त्वज्ञानविचारणायां विशिष्टबुद्धिपरिकलिता सत्त्वा एव समर्था भवन्ति. सामान्यजनास्तु न तथाविधाः, समुद्रेऽटतां सांयात्रिकाणां द्वीपदीपिका यथा मार्गदर्शिन्युपकारिणी तथैव संसारसमुद्रे भ्रमतां जीवानां आध्यात्मपरिप्लुष्टजीवितान्तःकरणानां मुनिवराणां जीवनगाथा एव द्वीपदिपिका. यासामवलम्बनेनानेके जीवा ऐहिकवासनात्यागेन अध्यात्ममार्गे आगच्छन्ति.

अयं ग्रंथो अध्यात्ममार्गे-मोक्षमार्गे प्रस्थितानां सफलीभूतानां मुनिवराणां जीवनगाथारूपोऽस्मिन् ग्रन्थे एकाशीति-महापुरुषचरित्रजीवनसौरभता.

क्रोधत्याग-मानत्याग-मायात्याग-लोभत्याग-सामायिक-प्रतिक्रमण-न्यायपरीषहसहन इत्यादि विविधगुणपरिकर्मित-महापुरुषाणां जीवनगाथाचिन्तनेन क्रोधत्यागादिगुणा वाचकमनसि आविर्भवेयुः। क्रोधादिकारणसमुत्पन्ने संयतपथादर्शस्मरणेन तज्जयाय प्रयत्नशीलाश्च वाचका भवेयुः इत्येव एतच्चरित्रनिर्देशस्य फलं. अतिमुक्तकमुनि-सुकोशलमुनि-कार्तिकश्रेष्ठि-चिलातीपुत्रादिकथानां निर्देशस्य फलं वैराग्यभावनाविर्भावः वाचकहृदये प्रसरतु इत्येव

अयं ग्रन्थो पूर्वाचार्यगुम्फितऋषिमण्डलवृत्ति-योगशास्त्र-उत्तराध्ययन-त्रिषष्ठिशलाकापुरुषचरितादिविविधग्रन्थोध्धृतच-रितसंकलनारूपोऽतोऽस्य ग्रन्थस्य प्रणेतारः जैनशासनप्रभावककार्योद्दिपितजीवनसौरभाः धर्मघोषसूरि-कलिकालसर्वज्ञ हेमचन्द्रसूरिवराधनेकतत्तद्ग्रन्थकारपूर्वमहर्षय एव

अत्र ग्रन्थनिर्माणे न काचिदस्माकं मनीषा, बुद्धिप्रागलभ्यं, चातुर्यं, विद्वत्वं च, वैराग्यमेवाभयं इति पद्यं सततपरिशीलनरतैः वैराग्यवाहितान्तकरणैः पूज्यप्रवरशान्तमूर्तिपन्यासप्रवर कैलाससागरगणिवरैः अस्य ग्रन्थस्य संकलना स्वपठनपाठनगतवैराग्य वाहिचरित्राणां संग्रहेण कृता. अस्य ग्रन्थस्य प्रकाशनं च तैरेव पूज्यप्रवरैः वैराग्यप्रपारूपग्रन्थावलोकनश्रवणेन प्रशमीभूता भव्या निर्वेदमासाद्य भद्रं साधयन्तु इत्येकं कारणं पुरस्सरीकृत्यारब्धं. एष आशयः वाचका सफलीकुर्वन्तु इत्याशास्महे.

मुद्रणदोष-दृष्टिदोष—मतिवैकल्यादिभिः या दुर्निवाराः काश्चिदशुद्धयः ताः सर्वे शोधयन्तु विद्वांसः

वि. सं. २००७ अश्विनशुक्लद्वितीया<br>
अहमदाबाद

विदुषां वशंवदः<br>
पं. मफतलाल.

# जैनकथार्णवगतविशिष्टपद्यानि

१ शरीरं श्लथते नाशा, रूपं याति न पापधीः । जरा स्फुरति न ज्ञानं, धिग् स्वरूपं शरीरिणाम् ॥३६॥ पृ. २०-१-४

२ यथालाभस्तथा लोभो, लाभाल्लोभः प्रवर्धते । माषद्वयाश्रितं कार्यं, कोटयाऽपि नहि निष्ठितम् ॥५२॥ पृ.२६-२-३

३ केसिं च वरं मरणं, जीवियमन्नेसिं । केसिंवि उभयंपि ॥ १ ॥ २९ २-८

४ स्त्रीरूपाऽपि क्षमैवैका, क्रोधयोधं जयत्यमुम् । गुणाः परे तु तं जेतुं, पुंरूपा अपि न क्षमाः ॥ २४ ॥ ३३-१-१

५ क्षमातपोभ्यां युक्तत्वात्, क्षमाश्रमण उच्यते । ३३-१-११

६ अतिलोभो न कर्तव्यो लोभं नैव परित्यजेत् । अतिलोभाभिभूतात्मा सागरः सागरेऽपतत् ॥ १ ॥ ३७-२-६

७ यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं, सोदरोऽपि विमुञ्चति ३८-१-३

८ यस्याधारे प्रवर्तन्ते प्रजाः सौख्यसमृद्धिभिः । स एव कीर्त्यते राजा इति स्मृतिवचो यतः ॥ ४०-२-१२

९ विचार्य वाच्यं वचनं हितं मितं, न कर्कशं क्वाऽपि निगद्यते बुधैः ४१-१-५

१० अतर्कितानि सौख्यानि दुखान्यपि शरीरिणाम् । भवति तदलं क्लेशहेतुना चिन्तयाऽनया ॥ १० ॥ ४१-२-६

११ येन यादृग्वचः प्रोक्तं स तादृक्फलमश्नुते । ४२ २-१

१२ परिग्रहप्रौढशिलावलम्बिनः पतन्ति संसारमहाम्बुधौ जनाः । ४४-१-७

१३ मृत्कुलादृशं पुण्यं मर्कटीसदृशा रमा । ४४-२-१०

१४ स्वस्थानाद्यत्परस्थानं प्रमादस्य वशाद्गतः तत्रैव क्रमणं भूयः प्रतिक्रमणमुच्यते ४७-१-१

१५ सङ्कटे पतितेऽप्येवं ये न मुञ्चन्ति निश्चयम् । तेषां हस्तगतेव स्यात्, निर्वाणसुखसन्ततिः ॥ पृ. ४७-२-१२

१६ लब्धास्वादः पुमान् यत्र, तत्रासक्तिं न मुञ्चति । ४८-१-१०

१७ न हिताश्चाटुभाषिणः ४९-१-८

१८ आत्मभूताः प्रजा राज्ञो राजा न छेत्तुमर्हति ॥ ४९-१-११

१९ सर्वदोषप्रसूर्लोभो लोभः सर्वगुणापहः । ४९-१-१२ यतः सन्तोषसाराणि सौख्यान्याहुर्महर्षयः ॥ ५०-२-४

२० आत्मन् यादृक् कृतं कर्म तादृशं फलमाप्नुहि । यादृक्षमुप्यते बीजं फलं तादृक्षमाप्यते ॥ ३९ ॥ ५५-१-४

२१ नाऽसत्या यमिनां गिरः ॥ ५६-२-२

२२ प्रमादसंगतेनाऽपि या वाक् प्रोक्ता मनस्विना । सा कथं दृषदुत्कीर्णाक्षरालीवाऽन्यथा भवेत् ॥ ५७-१-१५

२३ जहाति द्युमणिं को हि, विनायाससमुपस्थितम् ॥ ५७-२-१

२४ धर्मकृत्येषु सारं हि वैयावृत्यं जगुर्जिनाः । तत्पुनर्ग्लानसम्बन्धि विना पुण्यं न लभ्यते ॥ ५८-२-३

२५ निषिद्धमपि कार्यं हि, कार्यमापदि धीधनैः ॥ ५९-२-१२

२६ स एव हि पूज्यो गुरुश्च जनकोऽपि च शिष्यं सुतं च यः क्वाऽपि नैवोन्मार्गे प्रवर्तयेत् ॥ ६०-२-१४

२७ भग्नचित्तोऽभवत्को या कामिनीभिर्न भिद्यते ? ॥ ६३-१-१

२८ सह कलेवर! खेदमचिन्तयन् स्ववशता हि पुनस्तव दुर्लभा । बहुतरं सहिष्यसि जीव हे ! परवशो न च तत्र गुणोऽस्ति ते ॥ ६४-२-१३

२९ अपि दैवबलाद्धर्मबलमेव विशिष्यते ॥ ६७-२-११

३० अक्कोसहणणमारण—धम्मब्भंसाण बालसुलहाणं । लाभं मण्णइ धीरो, जहुत्तराणं अलाभंमि ॥ ६८-२-१
३१ अकार्यं विद्यते किञ्चि—न्नाऽविमृश्य विधायिनाम् ॥ ६२-२-३
३२ मर्त्तव्यं कातरेणापि, धीरेणापि च भूस्पृशा । द्विधापि नियते मृत्यौ, धीरैर्भाव्यं मनस्विभिः ॥ ६२-२-९
३३ महर्षीणां सुराणां च न ह्यवज्ञा शुभावहा ! ॥ ७०-२-४
३४ स्वार्जितं भुज्यते कर्म, न परः कोऽपि कारणम् ॥ ७४-२-७
३५ राग-द्वेषादयस्तीव्राः, स्नेहपाशा भयङ्कराः ॥ ७७-१-१३
३६ शरीरं नौरिति प्राहुर्नाविको जीव उच्यते । संसारो वारिधिः प्रोक्तो, यं तरन्ति महर्षयः ॥ ७८-१-१३
३७ तदस्यां संसृतौ सर्वेऽनित्या भावा धनादयः ॥ ८१-२-९
३८ सुट्ठु गाइयं सुट्ठु वाइयं णच्चियं सामसुंदरी ! । अणुपालिय दिहराइ(ति)याउ सुमिणंतए मा पमायए ॥ ८४-१-४
३९ याति धर्ममकृत्त्वैवं, योऽमुत्र सोऽसुखी भवेत् । कृत्वा धर्मं पुनर्याति, सोऽल्पकर्मा सुखी भवेत् ॥ ९१-२-३
४० दाराः सुताः सुहृद्वर्गो, बन्धवश्च सहोदराः । जीवन्तमनुजीवन्ति, मृतान् [तं] नानुव्रजन्त्यपि ॥ ९५-१-८
४१ कालकूटं यथा पीतं, हन्ति शस्त्रं च दुर्धृतम् । एवं विषययुग् धर्मो, व्यापन्नो हन्ति भूतवत् ॥ ९७-२-१
४२ स्त्रीणामेकाकिनां हि, कामाग्निर्वाधतेऽधिकम् ॥ १०४-२-३
४३ दैवं हि दुर्मतिं दत्ते, चपेटां न कपोलयोः ॥ ११५-२-१३
४४ लोभाभिभूतमनसां विवेकः स्यात्कियच्चिरम् ॥ ११७-१-१४
४५ स्त्रियो मुग्ध ! सुधास्तुष्टा, रुष्टा हि विषमं विषम् ॥ १२०-१-१२

# जैनकथार्णवविषयानुक्रमः

थाः ॥

# जैनकथार्णवशुद्धिपत्रकम्

| अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| पूर्वभवानि | पूर्वभवाः | १ | १ | ७ | दोपतः | दोपतः | ४ | १ | १५ | सेवये | सेवायै | ९ | १ | ५ |
| प्रकाषदि | मकपदि | १ | १ | ११ | पन्त्ये | पत्न्ये | ४ | २ | १ | तय | तया | ९ | १ | ७ |
| क्वमागतम् | क्रमागतम् | १ | २ | ६ | शसा | शता | ४ | २ | ३ | पिष्टि | पिष्टे | ९ | १ | ८ |
| भुक्तकृत | भुक्तकृते | २ | १ | ६ | सङ्का | सङ्का | ४ | २ | ११ | जापामाणि | जातपाणि | १२ | १ | २ |
| हाराद्यलङ्कांराः | हाराद्यलङ्काराः | १ | २ | १० | सखेन | सुखेन | ५ | १ | १० | मशिश्रयत् | मशिश्रियत् | ९ | २ | ५ |
| किश्चित | किञ्चित् | २- | १ | ८ | चतुपष्टि | चतुःपष्टि | ५ | १ | ११ | घावक | घातक | ९ | २ | ६ |
| जीवीका | जिविका | २ | १ | ८ | पभू | प्रभू | ६ | १ | २ | धावितः | धावितः | ९ | २ | ११ |
| ग्राह | प्राह | ३ | १ | ४ | चतुःपष्टिर्गुणान् | | | | | विहरन्त्यथ | विहरन्त्वथ | १० | १ | १२ |
| श्च्युतः | श्च्युतः | ३ | १ | ११ | | चतुःपष्टिं गुणान् | ६ | २ | १० | व्यणीयु | व्यतीयु | १० | २ | ११ |
| वभूयु | वभूवु | ३ | २ | १४ | धट | घट | ६ | २ | ६ | विघिना | विधिना | ११ | १ | २ |
| प्रासध्य | प्रसाध्य | ४ | १ | १ | मशिश्रयत् | मशिश्रियत् | ७ | १ | ५ | शान्तीनाथ | शान्तिनाथ | ११ | १ | ८ |
| महाहियः | महाह्रियः | ४ | २ | २ | प्रविशने | मवेशने | ९ | १ | २ | अशिश्रयत् | अशिश्रियत् | ११ | २ | १-७ |

| अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| कापी | वापी | २८ | २ | १४ | ब्रीवीत्स | ब्रवीत्स | ३५ | २ | २ | ब्रीवीत् | ब्रवीत् | ४० | १ | २ |
| निर्मित | र्निर्मित | २८ | २ | १५ | मादृसं | मादृशां | ३५ | २ | ३ | तत्प्रतिज्ञां | तत्प्रतिज्ञां | ४० | १ | ३ |
| न्यमुन्यवक् | न्यमून्यवक् | २९ | २ | २ | अकृशाया | अकृपाथा | ३६ | १ | २ | उत्तरस्वा | उत्तरस्या | ४० | १ | ३ |
| चकारः | चकार | २९ | २ | ५ | भूपाद्या | भूपाद्या | ३६ | १ | ४ | ब्राह्मये | ब्राह्मे | ४१ | २ | १० |
| हरत्यधं | हरत्यघं | ३० | २ | ३ | श्वश्रू वधू द्वे | श्वश्रुर्वधूर्द्वे | ३६ | २ | २ | वादिन | वादिना | ४२ | २ | ९ |
| चम्य | चम्पा | ३१ | १ | ७ | दारुं | दारु | ३६ | २ | ५ | ह्यवावाप्यते | ह्यवाप्यते | ४२ | २ | ९ |
| विरहन् | विहरन् | ३१ | २ | ४ | एयदा | एकदा | ३६ | २ | ७ | तैथाऽपि | तथापि | ४२ | २ | १० |
| प्रमीवना | प्रभावना | ३१ | २ | १५ | श्वश्रूता | श्वश्रूस्ता | ३६ | २ | ९ | वादितौ | वादिता | ४२ | २ | १० |
| प्रणमन्स्तुवन् | प्रणमंस्तुवन् | ३२ | १ | १ | कापि | क्वापि | ३७ | १ | १ | स्तावत् | स्तावत् | ४३ | १ | १४ |
| क्रोघफलं | क्रोधफलं | ३२ | २ | १२ | मुर्खं! | मूर्खं! | ३७ | १ | १० | विषवे | विषये | ४४ | १ | १ |
| रञ्जितः | रञ्जिता | ३३ | १ | ३ | गृहामागते | गृहमागते | ३७ | २ | ५ | लाप्यसे | लाप्यसे | ४४ | १ | १० |
| वार्ता | वार्ता | ३३ | १ | ५ | श्रयन्त्यः | स्रवन्त्यः. | ३७ | २ | १३ | त्वत्पुण्व | त्वत्पुण्य | ४४ | २ | ९ |
| जात | जाता | ३३ | २ | ९ | निति | नीति | ३८ | १ | ९ | भिपेकेन | भिषेकेण | ४४ | २ | १५ |
| किन्तु | किन्तु | ३४ | १ | १० | जिवितव्य | जीवितव्य | ३८ | २ | १० | भा | मा | ४५ | १ | १ |

| अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| रुन्पन्नै | रुत्पन्नै | १२ | १ | २ | यद्रूपं | यद्रूपं | १९ | १ | २ | व्याघि | व्याधि | २४ | २ | २ |
| भण्डलि | मण्डलि | १२ | १ | ९ | भूपण | भूषण | १९ | २ | ५ | दशम | दशा | २४ | २ | ७ |
| आंयुपः | आयुपः | १२ | २ | १ | व्यधि | व्याधि | २० | २ | १२ | प्राघुर्णकाय | प्राघूर्णकाय | २५ | १ | १२ |
| अच्युत् | अच्युत | १२ | २ | २ | केया | केशा | २१ | १ | ४ | तछुत्वा | तच्छुत्वा | २५ | २ | १३ |
| स्वमिनो | स्वामिनो | १३ | २ | २ | मुद्रितउ | मुद्रित | २१ | १ | ६ | वृद्धि | वृद्धिं | २६ | १ | १२ |
| धातृ | धात्री | १३ | २ | ५ | मघीश्वरः | मघीश्वरः | २१ | २ | १ | मोदके | मोदकै | २६ | १ | १५ |
| प्रोवाच्च | प्रोवाच | १३ | २ | ११ | दशम | दशा | २२ | १ | ९ | मुनि | मुनिं | २६ | २ | ११ |
| पुरुपोत्तमान् | पुरुषोत्तमाः | १४ | २ | ६ | दशम | दशा | २२ | २ | ८ | तालेपु | तालेषु | २६ | २ | १४ |
| दयद | दयाद | १४ | २ | ७ | सप्तति | सप्तभि | २२ | २ | १३ | स्नरीन् | भूरीन् | २७ | १ | ३ |
| अग्रो | अथो | १४ | २ | ९ | राज्वे | राज्ये | २३ | १ | ३ | शिव | शिवं | २७ | १ | १० |
| द्यानः | द्धानः | १५ | २ | ७ | रवयम् | स्वयम् | २३ | १ | ३ | जन्मभू | जन्मभूः | २७ | १ | १२ |
| मान्मजम् | मात्मजम् | १६ | १ | ४ | दशम | दशा | २३ | १ | ६ | प्रनष्टवान् | प्रणष्टवान् | २७ | २ | १४ |
| इत्युपगार्थे | इत्युपसगार्थे | १६ | २ | ६ | दशम | दशा | २३ | २ | ५ | त्रमिदं | त्रोऽसकौ | २८ | १ | १२ |
| चतुर्विंघं | चतुर्विधं | १८ | १ | ११ | जितो | र्जितो | २४ | १ | ११ | मेवं | मेव | २८ | २ | ९ |

| अशुद्धम् | शुद्धम् | पृ० | | पं० |
|---|---|---|---|---|
| कापी | वापी | २८ | २ | १४ |
| निर्मित | निर्मित | २८ | २ | १५ |
| न्यमुन्यवक् | न्यमून्यवक् | २९ | २ | २ |
| चकारः | चकार | २९ | २ | ५ |
| हरत्यधं | हरत्यघं | ३० | २ | ३ |
| चम्य | चम्पा | ३१ | १ | ७ |
| विरहन् | विहरन् | ३१ | २ | ४ |
| प्रभीवना | प्रभावना | ३१ | २ | १५ |
| प्रणमन्स्तुवन् | प्रणमंस्तुवन् | ३२ | १ | १ |
| क्रोघफलं | क्रोधफलं | ३२ | २ | १२ |
| रञ्जितः | रञ्जिता | ३३ | १ | ३ |
| वार्ता | वार्ता | ३३ | १ | ५ |
| जात | जाता | ३३ | २ | ९ |
| किन्तु | किन्तु | ३४ | १ | १० |
| ब्रीवीत्स | ब्रवीत्स | ३५ | २ | २ |
| मादृशं | मादृशां | ३५ | २ | ३ |
| अकुशाया | अकृपाया | ३६ | १ | २ |
| भूपाद्या | भूपाद्या | ३६ | १ | ४ |
| श्वश्रू वधू द्वे | श्वश्रुर्वधूर्द्वे | ३६ | २ | २ |
| दारुं | दारु | ३६ | २ | ५ |
| एयदा | एकदा | ३६ | २ | ७ |
| श्वश्रूता | श्वश्रूस्ता | ३६ | २ | ९ |
| कापि | क्वापि | ३७ | १ | १ |
| मुर्ख! | मूर्ख! | ३७ | १ | १० |
| गृहामागते | गृहमागते | ३७ | २ | ५ |
| श्रयन्त्यः | स्रवन्त्यः. | ३७ | २ | १३ |
| निति | नीति | ३८ | १ | ९ |
| जिवितव्य | जीवितव्य | ३८ | २ | १० |
| ब्रीत्रीत् | ब्रवीत् | ४० | १ | २ |
| तत्प्रतिज्ञां | तत्प्रतिज्ञां | ४० | १ | ३ |
| उत्तरस्त्रा | उत्तरस्या | ४० | १ | ३ |
| ब्राह्मये | ब्राह्मे | ४१ | २ | १० |
| वादिन | वादिना | ४२ | २ | ९ |
| ह्यवावाप्यते | ह्यवाप्यते | ४२ | २ | ९ |
| तैथाऽपि | तथापि | ४२ | २ | १० |
| त्रादितौ | वादिता | ४२ | २ | १० |
| स्तावत् | स्तावत् | ४३ | १ | १४ |
| विपवे | त्रिपये | ४४ | १ | १ |
| लाम्यसे | लाप्यसे | ४४ | १ | १० |
| त्वत्पुण्व | त्वत्पुण्य | ४४ | २ | ९ |
| भिपेकेन | भिषेकेण | ४४ | २ | १५ |
| भा | मा | ४५ | १ | १ |

| अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| रुन्पन्नै | रुत्पन्नै | १२ | १ | २ | यद्रूपं | यद्रूपं | १९ | १ | २ | व्याघि | व्याधि | २४ | २ | २ |
| भण्डलि | मण्डलि | १२ | १ | ९ | भूपण | भूषण | १९ | २ | ५ | दृशम | दशा | २४ | २ | ७ |
| आंयुपः | आयुपः | १२ | २ | १ | व्यधि | व्याधि | २० | २ | १२ | प्राघुर्णकाय | प्राघूर्णकाय | २५ | १ | १२ |
| अच्युत् | अच्युत | १२ | २ | २ | केया | केशा | २१ | १ | ४ | तछुत्वा | तच्छुत्वा | २५ | २ | १३ |
| स्वमिनो | स्वामिनो | १३ | २ | २ | मुद्रितउ | मुद्रित | २१ | १ | ६ | वृद्धि | वृद्धिं | २६ | १ | १२ |
| धातृ | धात्री | १३ | २ | ५ | मघीश्वरः | मथीश्वरः | २१ | २ | १ | मोदके | मोदकै | २६ | १ | १५ |
| प्रोवाच | प्रोवाच | १३ | २ | ११ | दशम | दशा | २२ | १ | ९ | मुनि | मुनिं | २६ | २ | ११ |
| पुरुषोत्तमान् | पुरुषोत्तमाः | १४ | २ | ६ | दशम | दशा | २२ | २ | ८ | तालेपु | तालेषु | २६ | २ | १४ |
| दयद | दयाद | १४ | २ | ७ | सप्तति | सप्तभि | २२ | २ | १३ | स्वरीन् | भूरीन् | २७ | १ | ३ |
| अग्रो | अथो | १४ | २ | ९ | राज्वे | राज्ये | २३ | १ | ३ | शिव | शिवं | २७ | १ | १० |
| द्घानः | द्धानः | १५ | २ | ७ | स्वयम् | स्वयम् | २३ | १ | ३ | जन्सभू | जन्मभूः | २७ | १ | १२ |
| मान्मजम् | मात्मजम् | १६ | १ | ४ | दशम | दशा | २३ | १ | ६ | प्रनष्टवान् | प्रणष्टवान् | २७ | २ | १४ |
| इत्युपगार्थे | इत्युपसगार्थे | १६ | २ | ६ | दशम | दशा | २३ | २ | ५ | त्रमिदं | त्रोऽसकौ | २८ | १ | १२ |
| चतुर्विवं | चतुर्विधं | १८ | १ | ११ | जितो | जिंतो | २४ | १ | ११ | मेवं | मेव | २८ | २ | ९ |

| अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| षुरस्त्री | पुरस्त्री | ४५ | १ | ३ | विमुच्यते | किमुच्यते | ४७ | २ | ७ | प्रेययिष्यामि | प्रेर्ययिष्यामि | ५२ | २ | ११ |
| प्रतिभाश्च | प्रतिमाश्च | ४५ | १ | ७ | घम्मो | धम्मो | ४७ | २ | १४ | सोऽस्णामे | सोऽस्णाभे | ५३ | २ | ३ |
| षरिग्नह | परिषह | ४५ | १ | ९ | मप्व | मप्य | ४८ | १ | १ | श्लाघ्यो | श्लाघ्यो | ५३ | २ | ५ |
| स्नानादि | स्नानादि | ४५ | २ | १२ | श्राग्नही | श्राग्रही | ४८ | १ | ८ | अवकेशी | अवकेशि | ५४ | १ | २ |
| ग्रेहे | ग्रे | ४६ | १ | ६ | जक्षे | जह्ने | ५० | २ | ५ | क्रुदग्निना | क्रुधग्निना | ५४ | १ | ८ |
| नस्ति | नास्ति | ४६ | १ | ८ | न्तुर्वौं | न्तुर्व्यौं | ५१ | २ | ४ | परिधं | परीधं | ५४ | १ | ८ |
| प्रतिकमण | प्रतिक्रमण | ४६ | २ | १० | वोढ्रणि | वोढ्रणि | ५१ | २ | ८ | मघ्पस्थं | मध्यस्थं | ५४ | २ | १ |
| यत | यत् | ४६ | २ | १० | तरुष्का | तुरुष्का | ५१ | २ | १५ | भ्रुण | भ्रूण | ८४ | २ | ९ |
| पच्चुप्पन्ने | पच्चुप्पन्ने | ४६ | २ | १३ | सर्पं | सूर्पं | ५२ | १ | १ | वन्धादि | बन्धादि | ५५ | १ | १२ |
| भुयः | भूयः | ४७ | १ | १ | वारिखाम्भसः | | | | | भगवान | भगवान | ५६ | १ | १ |
| श्रीषत्तने | श्रीपत्तने | ४७ | १ | ४ | | वारि खाम्भसः | ५२ | १ | ३ | प्युचे | प्यूचे | ५६ | १ | ७ |
| देव्यार्प्पयत् | देव्यार्प्पयत् | ४७ | १ | ११ | मूपा | मूषा | ५२ | १ | १० | माक्षदायित्वे | मोक्षदायित्ये | ५६ | २ | ११ |
| तथा | तदा | ४७ | २ | ४ | वर्ग | वर्गं | ५२ | २ | १ | व्रासी | वासी | ५७ | १ | ३ |
| दुकुल | दुकूल | ४७ | २ | ६ | संलेखनां | संलेखनां | ५३ | २ | २ | द्युमणि | द्युमर्णि | ५७ | २ | १ |



| अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| वत्स | वत्स | ५९ | १ | १ | यघ्य | यद्ध | ६५ | २ | १० | मशिश्रयन् | मशिश्रियन् | ७३ | १ | ४ |
| मध्यान्दिने | मध्यन्दिने | ५९ | २ | ७ | मालर्पि | मालिकर्षि | ६६ | २ | ६ | निस्तृंशो | निस्त्रिंशो | ७४ | १ | १ |
| रूपाययुः | रुपाययुः | ६१ | १ | १० | पुरे | पुरे | ६६ | २ | ७ | :रर्हता | रर्हता | ७४ | १ | ६ |
| गुफा | गुहा | ६१ | २ | ३ | ऽछिद् | ऽच्छिद् | ६७ | १ | ८ | दृष्ट | दृष्ट | ७४ | २ | २ |
| स्थित्वा | स्थितत्वा | ६१ | २ | ५ | क्रमाद् | क्रमा | ६९ | १ | ११ | जन्ननाम् | जन्मनाम् | ७४ | २ | ६ |
| विरुहातुर | विरहातुर | ६२ | १ | ९ | विन्दुभिः | ब्रिन्दुभिः | ६९ | २ | १३ | सोनान्यं | सेनान्यं | ७४ | २ | १३ |
| याचसि | याचते | ६२ | २ | ५ | निरिक्षितुम् | निरीक्षितुम् | ७० | १ | ६ | ह्रेपिताः | हेपिताः | ७५ | २ | १० |
| बिहवलो | विह्वला | ६२ | २ | ६ | पश्यत् | पश्यत | ७० | १ | ७ | मणीधि | प्रणिधि | ७६ | १ | ११ |
| स्येन | स्थेन | ६३ | १ | १० | इत्युदिर्येति | इत्युदीर्येति | ७० | २ | ५ | देवनन्दा | देवानन्दा | ७९ | १ | ६ |
| रवमान | समान | ६४ | १ | ७ | प्रतिमा | प्रतिमां | ७१ | १ | ६ | मब्रवोत् | मब्रवीत् | :७९ | २ | १२ |
| वपुः | पपुः | ६४ | १ | ७ | स्तस्य | स्तस्या. | ७१ | १ | ६ | स्मा | स्म | ८० | २ | ९ |
| कियता | कियती | ६४ | १ | १० | ऽब्रवीत् | ऽब्रवीत् | ७१ | २ | ७ | नापितो | नार्पितो | ८० | २ | १३ |
| उल्लालो | कल्लोलो | ६५ | २ | ७ | पराङ्मुखः | पराङ्मुखः | ७१ | २ | ८ | भर्भकम्। | मर्भकम्। | ८० | २ | १४ |
| देवभूवं | देवभूयं | ६५ | २ | ९ | विक्ष्य | वीक्ष्य | ७१ | २ | १२ | जरदद्रवम् | जरद्गवम् | ८१ | २ | ७ |

शुभम्

॥

| अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० | अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| प्रतिम्बद्ध | प्रतिबद्धः | ८१ | २ | ११ | कोगोत्रो | किंगोत्रो | ९५ | २ | २ | जीवना | जीवमा | १०६ | १ | १ |
| करकंडवाख्य | करकंड्वाख्य | ८१ | २ | ११ | अनर्था | अनर्थी | ९५ | २ | ११ | रवङ्ग | रवङ्ग | १०६ | २ | २ |
| योग्यं तद् | योग्यः सः | ८२ | २ | २ | साघून् | साधून् | ९६ | १ | ४ | गृघ्र | गृध्र | १०७ | १ | १४ |
| निवृतः | नीवृतः | ८२ | २ | ६ | सोमता | सौम्यता | ९६ | १ | ८ | मेवासौ | एवासौ | १०७ | १ | १८ |
| बद्वा | वलम् | ८२ | २ | ९ | विवाह | विवाहं | ९८ | २ | ४ | द्रुतम् | द्रुद्रुतम् | १०७ | २ | ४ |
| तरितव्यो | तरीतव्यो | ९१ | २ | १३ | स्वामिस्ते | स्वामिंस्ते | १०१ | २ | २ | तस्यास्या | तस्यास्य | १०८ | १ | १४ |
| पक्तो | पक्वो | ९२ | १ | ६ | दण्डकै | कण्डकै | १०२ | १ | ११ | प्रच्छन्नेन | प्रच्छनेन | १०८ | २ | १२ |
| भीतमे | भीतने | ९२ | २ | २ | दण्डकेभ्पो | कण्डकेभ्यो | १०२ | १ | १४ | चत्य | चैत्य | ११० | २ | १४ |
| कश्चित् | कथंचित् | ९३ | २ | ३ | अभिदघे | ऽभिदधे | १०२ | २ | १३ | ग्रामं ग्रामं | गामं गामं | ११५ | २ | ११ |
| माशिश्रयत् | मशिश्रियत् | ९३ | २ | ८ | अङ्गुलि | अङ्गुलिं | १०४ | १ | ४ | दुर्मेति | दुर्भेतिं | ११५ | २ | १३ |
| चतुः पल्यो | चतुष्पल्यो | ९४ | १ | २ | घिग | धिग | १०५ | १ | ३ | धराधरे | धाराधरे | ११८ | २ | ८ |
| चक्रतू | चक्रतु | ९४ | २ | ४ | शिष्वा | शिष्व | १०५ | १ | ५ | धृष्टा | घृष्टा | ११९ | २ | ३ |
| स्म्यसि | स्यस्मि | ९५ | १ | ४ | मुक्वा | मुक्त्वा | १०५ | २ | ३ | विषामि | विशामि | ११९ | २ | ९ |

## श्रीसद्गुरुप्रशस्तिः ।

समाधिस्थितयोगीन्द्रं, विद्युन्मीलितचक्षुषम् । सदा भान्तं प्रतापेन, धिया न्यक्कृतगीष्पतिम् ॥ १ ॥

निजानन्दाब्धिपूर्णेन्दुं, प्रतिष्ठितपदस्थितम् । गम्भीरवाचं मुग्धास्यं, गूढमात्मन्यवस्थितम् ॥ २ ॥

निर्विकल्पसमाधिस्थं, सर्वजन्तुशमप्रदम् । दूरीकृतविकल्पोद्यत्सज्ज्ञानभास्करं गुरुम् ॥ ३ ॥

विशुद्धचरितख्यातं, जगतीशसमर्चितम् । सिद्धान्तवचने दक्षं, सर्वपापतमोरविम् ॥ ४ ॥

देवेन्द्रवन्द्यतीर्थेश–ध्यानमग्नमहर्निशम् । संजातमोहमथनं, ज्ञानतत्त्वविलासिनम् ॥ ५ ॥

अनेकान्तविचारेण, निष्ठं तं जैनवर्त्मनि । सच्छिष्यश्रेणिराजन्तं चिदानन्दघनोज्ज्वलम् ॥ ६ ॥

निरस्तसर्वपापौघं, शान्तमुद्राविराजितम् । वरेण्यं नौमि वक्तारं बुद्ध्यब्धिं सूरिपुङ्गवम् ॥ ७ ॥

ऋद्धिसागरसूरीन्द्रः, सूरिश्च, कीर्तिसागरः । प्रणमतो गुरुं भक्त्याऽष्टकं स्ताद्भविनां मुदे ॥ ८ ॥

ॐ नमः श्री पार्श्वनाथाय

विविध जैन ग्रंथोद्धृत—

# जैनकथार्णवः

## प्रथमो विभागः

## १ देवाधिदेवतीर्थंकर—श्री ऋषभदेवचरित्रम्

**श्री ऋषभदेव पूर्व भवानि**

पुराऽपरविदेहेषु, पुरे क्षितिप्रतिष्ठिते । धनी धनाभिधानोऽभूद् धनेन धनदोपमः ॥ १ ॥
सोऽन्येद्युर्व्यवसायाय, वसन्तपुरपत्तनम् । गन्तुकामश्चकारोच्चैः, पटहोद्घोषणामिमाम् ॥ २ ॥
द्रव्यं द्रविणहीनानां, दुर्बलानां च शम्बलम् । वाहनं तद्विहीनानां, यच्छामि सममीयुषाम् ॥ ३ ॥
श्रुत्वा तामिति भूयांसो, वणिक्—कार्पटिकादयः । सगच्छा धर्मघोषाख्याः, सूरयश्च तमन्वगुः ॥ ४ ॥
करभैः सैरिभैर्जात्यहयैः शकटसञ्चयैः । पन्थाः पृथुरपि प्रापाकीर्णसङ्कीर्णतां तदा ॥ ५ ॥
प्रकार्षाद् वर्षितुं लग्नः, प्रावृष्यथ घनाघनः । मार्गवैषम्यतः सार्थोऽरण्ये तस्थौ ततोऽखिलः ॥ ६ ॥

क्रमेण क्षीणपाथेयाः, कन्दमूलफलाशिनः । बभूवुरखिला लोकास्तपःस्थास्तापसा इव ॥ ७ ॥
निशीथेऽन्येद्युरस्मार्षीत्, सार्थनाथस्तपोधनान् । प्रातराकार्य कार्यज्ञो, घृतेन प्रत्यलाभयत् ॥ ८ ॥
तेन दानेन सम्प्राप्तसम्यक्त्वश्चायुषः क्षये । उत्तरकुरुषूत्पन्नस्त्रिपल्यायुर्महासुखी ॥ ९ ॥
भवे तृतीये सौधर्मे, त्रिपल्यायुः सुरस्ततः । विजये गन्धिलावत्यां, प्रतीचीदिग्विदेहगे ॥ १० ॥
गान्धारदेशे वैताढ्ये, पुरे गन्धसमृद्धके । सम्राडतिबलस्तस्य, पुत्रः शतबलो नृपः ॥ ११ ॥
महिषी चन्द्रकान्ताख्या, जातश्च्युत्वा तयोः सुतः। महाबलाभिधः प्राप, राज्यं क्रमात् क्रमागतम् ॥१२॥ [त्रिभिः सम्बन्धः]
प्रिया विनयवत्यस्य, मन्त्री सुबुद्धिरास्तिकः। सद्धर्मा भिन्नसंभिन्नश्रोताश्चान्योऽस्ति नास्तिकः॥ १३ ॥
अन्यदा संसदासीनस्यास्य भूपस्य चाग्रतः । चकार चारुचारीभिर्नाटकं नटपेटकः ॥ १४ ॥
पश्यन्तं सस्पृहं नाट्यं, सुबुद्धिर्भूभुजं जगौ । स्फीतं गीतं विलापाभं, सर्वं नाट्यं विडम्बना ॥ १५ ॥
भारा हाराद्यलङ्काराः, सर्वे कामास्तु दुःखदाः । परं परत्र सर्वत्र, धर्मः शर्मकरोऽङ्गिनाम् ॥ १६ ॥
शूलभिन्न इवात्यन्तं, कपिकच्छूकदर्थितः । इवासहिष्णुश्चान्योऽदः प्रोवाच सचिवो वचः ॥ १७ ॥
प्रत्यक्षं सौख्यमुत्सृज्य, परोक्षार्थी विलक्षताम् । को मूढो नैति जम्बूक, इव त्यक्तमुखामिषः ? ॥ १८ ॥
को वा ग्रासं भाजनस्थं, हित्वाऽन्यस्मै प्रतीक्षते ? । पिपासुर्वाऽमृतं प्राप्य, सन्दिग्धाम्भः क इच्छति ? ॥ १९ ।
भुक्त्वा भोगानथो प्रान्ते, कुर्याद् वा सुकृतं कृती । स्तनं धयन्तं तनयं, को हि मातुर्वियोजयेत् ? ॥ २० ॥
सुबुद्धिरूचे यत् प्रान्ते, धर्मोद्धरणधीरता । तदेतद् दमनं लग्ने, सङ्ग्रामे गज-वाजिनाम् ॥ २१ ॥

कूपस्य खननारम्भो, लग्नेऽग्नौ सदनेऽथवा। पुरे रोधे क्रियान्नीरेन्धन–धान्यादिसङ्ग्रहः ॥ २२ ॥
श्रेयसः करणं प्रान्ते, दुर्घटं घटते यतः। इवाकालफलापातः, प्राणिनामायुषः क्षयः ॥ २३ ॥
अतो मतिमता विद्यमाने सम्यग्वयो बले। अहार्यकार्य एवासौ, धर्मः शर्मनिबन्धनम् ॥ २४ ॥
किञ्चातिलोभतः प्राणी, प्रायः प्राप्नोति चापदः। वनस्थजम्बुकस्येवामात्योऽवोचदसौ कथम् ? ॥ २५ ॥
सुबुद्धिरप्यधादेकोऽन्यदा वने वनेचरः। जगाम भ्रमता तेन, दृष्टो दूरस्थितः करी ॥ २६ ॥
जघानैकेन बाणेन, धन्यंमन्यो धनुर्द्धरः। हित्वा धनुः शरं पर्शुपाणिर्भुक्ताकृतेऽगमत् ॥ २७ ॥
तत्पातशब्दभीतेन, दष्टो दुष्टोरगेण सः। परस्मिंश्चिन्त्यते यच्च, प्रायः पतति तद्गृहे ॥ २८ ॥
दैवात् तत्रैक आयातः शृगालो ह्यचिन्तयत्। किञ्चितकालं नृसर्पाभ्यां करिणा जीवीका चिरम् ॥ २९ ॥
तावदद्मि धनुर्जीवां, भक्षयंस्तां ममार सः। तत्कोट्या तालुके भिन्ने, धिग् धिग् लोभान्धचेष्टितम् ॥ ३० ॥
भुञ्जानो विषयानेवं, तद्विपाकमचिन्तयन्। अतृप्तस्तृप्तिपर्यन्तं, परत्रामुत्र दुःखभाक् ॥ ३१ ॥
तथा देवान्यलोकोऽपि, न सन्दिग्धो यदेकदा। आवाभ्यां नाकिनो दृष्टा, गताभ्यां नन्दने वने ॥ ३२ ॥
तेष्वेकः प्राह ते सोऽहमतिबलः पितामहः। शुद्धधीर्धर्ममाराध्य, ब्रह्मलोकेन्द्रतां श्रितः ॥ ३३ ॥
त्वमप्युद्यच्छ संसारकारागाराद्विनिर्गमे। मा स्म शोचीर्भवाम्भोधौ पतितैरिव पक्षिभिः ॥ ३४ ॥
केऽमी पक्षिण इत्युक्ते, भवतोचे पुरन्दरः। हस्त्येकस्तृषितो ग्रीष्मे, नद्यां नीरार्थमाविशत् ॥ ३५ ॥
पङ्के मग्नस्तथा सोऽभूद् यथा निर्गन्तुमक्षमः। शृगालभक्षितापानद्वारा काकादयोऽविशन् ॥ ३६ ॥

मांसलोभेन मध्यस्थाः, सुस्थास्ते तस्थुरस्थिराः । शुष्कं सङ्कोचमापन्नं, हस्त्यङ्गं पद्मकोशवत् ॥ ३७ ॥
वर्षापूरेण तन्नीतं समुद्रं मत्स्य-कच्छपैः । भिन्नं भिन्नं च नीरेण, निरीयुस्तेऽखिला बहिः ॥ ३८ ॥
इतस्ततो भ्रमन्तश्चापश्यन्तः पारमम्बुधेः । विनाशमापुरात्मानं, निन्दन्तोऽदीर्घदर्शिनम् ॥ ३९ ॥
एवं संसारिणो जीवा, मर्त्यजन्मकलेवरे । तिष्ठन्तो दुःखितां यान्ति, लोभिनो विषयामिषे ॥ ४० ॥
तस्मादवसरं प्राप्योद्यमः कार्यः क्रियोपरि । पश्चान्मृत्युमुखं प्राप्तो, वत्स ! मा गच्छ दीनताम् ॥ ४१ ॥
एतत् स्मरसि तस्योक्तं, राज्ञोचे संस्मरामि भोः ! । मन्त्र्याह परलोकोऽपि, श्रद्धेयस्तर्हि निश्चितम् ॥ ४२ ॥
स्वामिंस्तवान्वये पूर्वं, कुरुचन्द्रोऽभवन्नृपः । भार्या कुरुमती तस्य, हरिश्चन्द्रः कुमारकः ॥ ४३ ॥
चार्वाकः स च चार्वाकमतं सत्यतया वदन् । न मन्यतेऽन्यलोकं नो, बन्ध-मोक्षौ वृषावृषौ ॥ ४४ ॥
स प्रान्तावसरे पुष्पस्रस्तरं प्रस्तरव्रजम् । गोशीर्षचन्दनं पूति, पयस्तप्तत्रपूपमम् ॥ ४५ ॥
दुकूलतूलीः शूलीव, शर्कराः कर्कशानिव । विदन् ज्ञात्वा रहो राज्ञी, सपुत्रा तमपालयत् ॥ ४६ ॥
पराङ्मुखतामसावापोग्रपापो विरसं रसन् । तत्पदे मन्त्रिभिर्न्यस्तो, हरिश्चन्द्रो नृपाङ्गजः ॥ ४७ ॥
पप्रच्छ सोऽन्यदा धर्मं, सुबुद्धिसचिवं निजम् । इतः पुरो बहिर्देवाश्चक्रुः केवलिनो महम् ॥ ४८ ॥
सुबुद्धिमन्त्रिणा सार्द्धं, भूपस्तं वन्दितुं गतः । पप्रच्छावसरे तातो, भगवन् ! मे गतः क्व नु ? ॥ ४९ ॥
भगवानाह सप्तम्यां, संवेगात् तौ व्रतं श्रितौ । मोक्षं गतौ चासङ्ख्याता, व्यतीयुस्ते तवान्वये ॥ ५० ॥
यावद् भवान् सुबुद्धेश्चान्वयेऽहं क्रम एष नः । सद्धर्मावसरो ज्ञाप्यः, प्रभोर्लोकान्तिकैरिव ॥ ५१ ॥

यच्चानवसरे रङ्गभङ्गजङ्गमसङ्गमम् । वचो वच्मि तदत्रापि, प्रगुणं कारणं शृणु ॥ ५२ ॥
श्रीविजयामितघोषौ, श्रमणौ नन्दने वने । गतेन दृष्टौ पृष्टौ च, कियदायुः प्रभोर्मम ? ॥ ५३ ॥
ताभ्यां मास इति प्रोक्तेऽत्याकुलो भवदन्तिके । आगतोऽतः परं देव !, यद् युक्तं तद् विधेहि भोः ॥ ५४ ॥
सम्भ्रान्तो भूपतिः प्राह, मन्त्रिन् ! स्तोकदिनैः कियान् । धर्मो भवति ? मन्त्र्याह, सोऽल्पोऽप्यनल्पसौख्यदः॥ ५५ ॥
यदेकाहकृता शुद्धा, प्रव्रज्या पारमेश्वरी । मोक्षं वैमानिकत्वं वा, ददात्यत्र न संशयः ॥ ५६ ॥
चैत्येष्वष्टाह्निकां कृत्वा, लात्वा संस्तारकव्रतम् । द्वाविंशत्यहैरीशाने विमाने श्रीप्रभे दिवि ॥ ५७ ॥
उत्पन्नो ललिताङ्गाख्यो, देवो देवी स्वयंप्रभा । यानिन्द्रेण समं नन्दीश्वरद्वीपे च्युतोऽथ सः ॥ ५८ ॥ युग्मम् ॥
विजये पुष्कलावत्यां पत्तने प्राग्विदेहगे । लोहार्गले नृपः स्वर्णजङ्घो लक्ष्मीः प्रिया तयोः ॥ ५९ ॥
पुत्रोऽभूद् वज्रजङ्घाख्यः, स पूर्वभवगेहिनीम् । श्रीमतीमुपयेमे श्रीवज्रसेनार्हतः सुताम् ॥ ६० ॥
क्रमात् सम्प्राप्तसाम्राज्यस्तल्लोभेनातिपाप्मना । विषधूपप्रयोगेण, हतः पुत्रेण सप्रियः ॥ ६१ ॥
उत्तरकुरुषूत्पन्नः, पूर्णायुर्युग्मधर्म्मिषु । त्रिपल्यायुश्च सौधर्मे, सुरो जातस्ततश्च्युतः ॥ ६२ ॥
अथो महाविदेहेषु, पुरे क्षितिप्रतिष्ठिते । सुविधेर्भिषजः पुत्रो, जीवानन्दाह्वयोऽजनि ॥ ६३ ॥
केशवः श्रीमतीजीवश्चत्वारः सुहृदोऽपरे । जज्ञिरेऽत्र नृपामात्य-सार्थप-श्रेष्ठिसूनवः ॥ ६४ ॥
विशेषात् पूर्वसम्बन्धादस्याद्ये प्रीतिरुत्तमा । एकजीवा इवान्योन्यं, समं चक्रुः क्रियाः समाः ॥ ६५ ॥
तिष्ठन्तोऽन्येद्युरप्यक्षुर्वैद्यपुत्रस्य मन्दिरे । भिक्षार्थमागतं दुष्टकुष्ठपुष्टं तपोधनम् ॥ ६६ ॥

सकृपाः सस्मितं प्राहुः, साहसं भिषजामहो ! । कुपात्रमपि लोभेन, चिकित्सन्ति न तूत्तमम् ॥ ६७ ॥
विज्ञाततदभिप्रायो, वयस्यान् प्राह वैद्यसूः । सत्यमेतत् परं नास्ति, धनं मे साध्य-साधनम् ॥ ६८ ॥
कम्बलश्चन्दनं तैलं, लक्षपाकं पृथक् पृथक् । विलोक्यतेऽत्र तत्राऽऽस्ते, तैलं मे लक्षपाककम् ॥ ६९ ॥
अमात्य-नृपपुत्राद्यैः, प्रोक्तमन्यद्द्वयं पुनः । करिष्याम इति प्रोच्य, सर्वेऽगुर्वणिगापणे ॥ ७० ॥
लक्षद्वयेन गृह्णन्तश्चन्दनं कम्बलं च ते । वणिजाऽभाणि किं कार्यं ?, तेऽपि साध्वर्थमादिशन् ॥ ७१ ॥
शिशूनामप्यहो ! बुद्धिर्धर्मे नो तादृशी मम । श्रेष्ठिश्रेष्ठ इति ध्यात्वा, विना मूल्यमदाद् द्वयम् ॥ ७२ ॥
वैराग्याच्च व्रतं लात्वा, सिद्धसौधाध्वगोऽभवत् । लात्वा समग्रसामग्रीं, ते जग्मुः श्रमणान्तिकम् ॥ ७३ ॥
भगवन्ननुजानीहि, कुर्मस्ते रुक्प्रतिक्रियाम् । इत्युक्त्वाऽभ्यङ्गमङ्गस्य, सिद्धतैलेन ते व्यधुः ॥ ७४ ॥
कम्बलेनाऽऽवृतादङ्गान्निरीयुः कृमयो बहिः । क्षुभितास्ते दयावद्भिर्निक्षिप्ता गोकलेवरे ॥ ७५ ॥
चन्दनालेपनं चक्रुरेवं द्विस्त्रिः प्रयोगतः । त्वग्मांसास्थिगताः कीटा, निर्गता गात्रतो मुनेः ॥ ७६ ॥
संरोहिण्या वरौषध्या, सुवर्णवपुषं मुनिम् । विधाय क्षमयित्वा च, धन्यंमन्या ययुर्गृहम् ॥ ७७ ॥
साध्वर्थकल्पितार्थेन, जिनचैत्यमचीकरन् । ते क्रमाद् व्रतमासाद्याच्युते कल्पेऽभवन् सुराः ॥ ७८ ॥
इतश्च जम्बूद्वीपस्य, विदेहे विजयेऽष्टमे । नगर्यां पुण्डरीकिण्यां, तीर्थकृत् वज्रसेनराट् ॥ ७९ ॥
तत्पत्नी धारिणी तस्या, वज्रनाभादयः सुताः । पञ्च पञ्चमुखप्राणा बभूवुरच्युतात् च्युताः ॥ ८० ॥ युग्मम् ॥
वज्रसेनो जिनो, लोकान्तिकैरागत्य बोधितः । दानं दत्त्वा व्रतं लात्वा, क्रमाज्ज्ञानमवाप च ॥ ८१ ॥

वज्रनाभः समुत्पन्नचक्ररत्नो भुवस्तलम् । प्रसह्य बन्धुभिः सार्द्धं, भुक्तवांश्चक्रिणः श्रियम् ॥ ८२ ॥
स्वाधीनानि निधानानि, नवाप्यस्य चतुर्दश । रत्नान्यश्वरथेभानां, लक्षाश्चतुरशीतिकाः ॥ ८३ ॥
चतुःषष्टिसहस्राणि, स्त्रियोऽस्य भोग्यतामगुः । वेदाक्षिलक्षपूर्वाणि, राज्यं भुक्त्वाऽन्तिके पितुः ॥ ८४ ॥
सबन्धुर्व्रतमादत्ताभूच्चतुर्दशपूर्ववित् । चत्वारो बाहुमुख्याश्चैकादशाङ्गविदोऽपरे ॥ ८५ ॥
वज्रनाभोऽभवत् सूरिरर्हदाराधनादिभिः । विंशतिस्थानकैस्तीर्थकृत्कर्माऽऽर्जीदसौ पुनः ॥ ८६ ॥
बाहुर्बहूनामन्नादिदानतश्चक्रिणः श्रियम् । सद्विश्रामणयाऽनर्ज सुबाहुर्बाहुशक्तिताम् ॥ ८७ ॥
सुलब्धमेतयोर्जन्म, सद्वैयावृत्यकारिणोः । व्याख्यान्तीत्यादिनाऽऽचार्याः, सन्तः सत्पक्षपातिनः ॥ ८८ ॥
श्रुत्वा पीठ–महापीठौ, स्वाध्याय–ध्यानबन्धुरौ । सञ्जातमत्सरौ चित्ते, वदतः स्म परस्परम् ॥ ८९ ॥
शरीरसुखकारी स्यात्, प्रायः श्लाघ्यो जने नरः । न धर्मे दृश्यतेऽत्रान्यथाऽहो ! मोहविजृम्भितम् ॥ ९० ॥
इत्युक्तवद्भ्यामेताभ्यां, स्त्रीवेद्यं कर्म सञ्चितम् । चतुर्दशपूर्वलक्षाः, सर्वेऽप्याराध्य सद्व्रतम् ॥ ९१ ॥
सर्वार्थसिद्धमासेदुर्दुरासदमदर्शनैः । त्रयस्त्रिंशत्पयोराश्यायुषः ससुखमायुषः ॥ ९२ ॥
इतश्च पश्चिममहाविदेहे वणिजावुभौ । वाणिज्यं चक्रतुः सार्द्धं, भद्रक–क्षुद्रकाशयौ ॥ ९३ ॥
क्षुद्रः प्रच्छन्नलाभादि स्थगयन्नाददे स्वयम् । मृत्वाऽत्र भरते जातौ, नरेभौ युग्मधर्मिणौ ॥ ९४ ॥
नरं वीक्ष्य गजः स्नेहात्, स्कन्धमारोहयत् स्वयम् । युग्मिनस्तमिति प्राहुर्नाम्ना विमलवाहनम् ॥ ९५ ॥
हीयमानेषु गीर्वाणद्रुमेषु कालदोषतः । युग्मिनः कलहायन्तेऽलभमानाः कलं फलम् ॥ ९६ ॥

साकं चन्द्रयशःपन्त्येभस्थं तं वीक्ष्य युग्मिनः। विवदच्छेदमिच्छन्तः, स्वावज्ञां तत्पुरोऽवदन् ॥ ९७ ॥
सोऽपि नीतिमिमामेषां हकाराख्यां समादिशत्। मर्यादास्थायिनां तेषां, न व्यतीयुर्महाह्रियः ॥ ९८ ॥
धनुर्नवशतान्युच्चः, प्रसूय युगलं स तु। पल्यस्य दशभागायुः, सुपर्णेषूदपद्यत ॥ ९९ ॥
चक्षुष्मान् कुलकृच्चान्यश्चन्द्रकान्तापतिर्नृपः। पल्यस्यासङ्ख्यभागायुरुच्चाङ्गोऽष्टधनुःशती ॥ १०० ॥
तामेव नीतिं नीतिज्ञो, दर्शयन्नपराधिनाम्। मृत्वा सुपर्णकुमारेऽगाद् राज्ये संस्थाप्य नन्दनम् ॥ १०१ ॥
यशस्वीति तृतीयोऽभूत्, सुरूपापतिरीश्वरः। आनुपूर्व्योनपूर्वायुः, धनुःसप्तशताङ्गवान् ॥ १०२ ॥
मर्यादाच्छेदिनां कालदोषान्नीतिद्वयं दिशन्। हकाराख्यां मकाराख्यामल्पानल्पापराधिनाम् ॥ १०३ ॥
मृत्वोदधिकुमारेऽगाद् राज्ये न्यस्य निजाङ्गजम्। चतुर्थोऽथाभिचन्द्रोऽभूत्, प्रतिरूपापतिः पतिः ॥ १०४ ॥
पूर्वोक्तायुर्वपुर्मानः, स सार्द्धं षड्धनुःशतम्। स्वायुर्दशांशे विन्यस्तपुत्रराज्योऽगमद् दिवम् ॥ १०५ ॥
धनूंषि षट्शतान्युच्चः, पञ्चमोऽथ प्रसेनजित्। चक्षुःकान्तापतिः पूर्वोक्तायुः प्रियङ्गुवर्णरुक् ॥ १०६ ॥
धिकाराख्यतृतीयाया, नीतेः कर्त्ता महागसाम्। मृत्वा द्वीपकुमारेऽगात्, स्वनुसङ्क्रामितेन्दिरः ॥ १०७ ॥
सार्द्धेषुशतचापाङ्गः, कुलकृन्मरुदेवकः। श्रीकान्तेशश्च पूर्वायुर्न्यस्य राज्ये तनूद्भवम् ॥ १०८ ॥
देवो द्वीपकुमारेऽभून्नीतित्रयप्रवर्त्तकः। सप्तमः कुलकृन्नाभिस्तत्पत्नी मरुदेव्यथ ॥ १०९ ॥
जम्बूद्वीपेऽत्र भरते, सुषमा–दुःषमारके। एकोननवतिपक्षैरूने स त्रुटिताङ्गके ॥ ११० ॥
आषाढाद्यचतुर्थ्यामुत्तराषाढागते विधौ। स जीवो वज्रनाभस्य, च्युत्वा सर्वार्थसिद्धितः ॥ १११ ॥

तस्याः कुक्षाववातारीत् सापि स्वप्नांश्चतुर्दश । ददर्श सुखनिद्राणा, प्रोन्निद्राननपङ्कजा ॥ ११२ ॥
गौर्गजः केशरी लक्ष्मीस्स्रात्रं दाम रविः शशी । ध्वजः कुम्भः सरोऽब्धिर्विमानं रत्नोच्चयः शिखी ॥ ११३ ॥
लष्टान् पुष्टानिमान् दृष्ट्वा हृष्टतुष्टा सती सती । स्पष्टमाचष्ट मिष्टाभिर्वाग्भिरभ्येत्य भूभुजम् ॥ ११४ ॥
स्वमिन्नद्य सतां कल्पे, तल्पे सुप्ता सती निशि । मुखे प्रविशतः स्वप्नान्, प्रबुद्धा वीक्ष्य साम्प्रतम् ॥ ११५ ॥
तदेषां किं फलं ? मन्ये, सद्यो मेऽद्य निवेद्यताम् । श्रुत्वा सम्यग् विचार्याऽऽर्यो, बुद्धिविज्ञानपूर्वकम् ॥ ११६ ॥
उवाच वाचमाचारपूतः सद्भूतमुन्नृपः । सर्वाङ्गसुभगो भाग्यलभ्यस्ते भविता सुतः ॥ ११७ ॥
स यौवनमनुप्राप्तः, प्रतापाक्रान्तभूतलः । आक्रमिष्यति भूपालमण्डलं भानुवन्नभः ॥ ११८ ॥
आकर्ण्य कर्णामृतवृष्टिकल्पं, नाभेर्वचः श्रीमरुदेव्यपीदम् । बभूव धाराहतनीपपुष्पमिवोल्लसद्विग्रहरोमकूपा ॥ ११९ ॥
शीर्षे दशनखावर्त्तं, विधायाञ्जलिमब्रवीत् । स्वामिन्निष्टमसन्दिग्धं, सम्यगेतत् प्रतीप्सितम् ॥ १२० ॥
इत्युक्त्वा नाभ्यनुज्ञाता, गृहमेत्य सुखेन सा । गर्भं बभार धौरेयं, सद्बीजं बीजसूरिव ॥ १२१ ॥
वासवाश्च चतुःषष्टि सद्रत्नकुक्षिधारिके ! । भवत्या भविता तीर्थकृत्पुत्रः प्रोचुरेत्य ताम् ॥ १२२ ॥
सार्द्धाष्टमदिने मासे, नवमे पूर्णदोहदा । सुतं प्रासूत चैत्रास्याष्टम्यामर्द्धनिशि प्रसूः ॥ १२३ ॥
काष्ठाः प्रसेदुरासेदुः, क्षणं नारकिणः सुखम् । हर्षाद्वैतमयं जज्ञे, जगच्चन्द्रोदयेऽब्धिवत् ॥ १२४ ॥
षट्पञ्चाशत्कुमारीणामासनानि चकम्पिरे । विज्ञायावधिनाऽभ्येत्य, जिनजन्मोत्सवं व्यधुः ॥ १२५ ॥
संवर्त्त–मेघाऽऽदर्शांश्च, भृङ्गार–तालवृन्तकान् । चामरोद्योतरक्षांश्च, कुर्युः कार्याणि ताः क्रमात् ॥ १२६ ॥

समातरं जिनं नत्वोद्गाय गीतानि तानि ताः। जग्मुर्यथागतं सर्वाः, प्रमोदाश्चितचेतसः ॥ १२७ ॥
अथाऽऽसनप्रकम्पोत्थावधिज्ञानेन वासवः। विज्ञो विज्ञाय सर्वज्ञजन्म—सन्महिमास्पदम् ॥ १२८ ॥
सुघोषघण्टाटङ्कारसावधानीकृतामरः। पालकाख्यविमानस्थः प्रापार्हज्जन्ममन्दिरम् ॥ १२९ ॥ युग्मम् ॥
दत्त्वाऽवस्वापिनीं मातुर्मुक्त्वा पार्श्वे जिनाकृतिम्। पञ्चरूपधरो मेरुधराधरमगाद्धरिः ॥ १३० ॥
रूपेणैकेन हस्तेऽलाद्, वहन् द्वाभ्यां च चामरे। एकेनोल्लालयन् वज्रं, छत्रमेकेन मूर्द्धन्यधात् ॥ १३१ ॥ युग्मम् ॥
क्षीरार्णवाहृताम्भोभिः, क्षालितं वपुरार्हतम्। वासवैश्चात्मनः पङ्कमनेकभवसञ्चितम् ॥ १३२ ॥
नाट्यपाटपटो नाट्यं, चक्रे शक्रवधूजनः। को वाऽऽसाद्य सुधाकुण्डमुदासीनो भवेत् सुधीः ? ॥ १३३ ॥
प्राचीनविधिनाऽऽनीयापनीय तद्विचेतनाम्। अलङ्कारान् प्रभोर्योग्यान् दत्त्वा खेलनकानि च ॥ १३४ ॥
ससुराः सुरराजाश्च, जग्मुः स्वर्गं यथागतम्। शशंस नाभये देवी, प्रबुद्धा सुतजन्म तत् ॥ १३५ ॥
प्रभो ऋषभ इत्याख्यां, पितरौ चक्रतुर्यतः। तदूर्वोर्वृषभाङ्कोऽस्ति, स्वप्ने प्राक् चेक्षितोऽम्बया ॥ १३६ ॥
गते देशोनवर्षेऽस्य, सेक्षुयष्टिः पुरन्दरः। दर्शनायाऽऽगतस्तत्र, प्रभुणा दृष्टिरर्पिता ॥ १३७ ॥
अक्षुं भवान् पाणिं, प्रससार जिनेश्वरः। इत्यत्रेक्ष्वाकुवंशस्य, स्थापनां वासवो व्यधात् ॥ १३८ ॥
अथ देवाहृतोत्तरकुरुस्वर्द्रुफलैः प्रभुः। पुपोष वपुषा वृद्धिं, सार्द्धं पित्रोर्मनोरथैः ॥ १३९ ॥
दिवश्च्युतोऽद्भुतश्रीको, देव—देवीभिराश्रितः। श्वेतदन्तद्युतिः श्यामशिरोजः सुसरोजदृक् ॥ १४० ॥
बिम्बोष्ठोऽष्टोत्तरं चारुलक्षणानां सहस्रकम्। दधानो धनुषां पञ्चशतमुच्चतया तनौ ॥ १४१ ॥

वृषभाङ्को धनूराशिर्भ्रातरुक्मसमाङ्गरुक् । छत्राकारशिरा जानुलम्बबाहुर्महाशयः ॥ १४२ ॥
नीलोत्पलाभनिःश्वासो. जातजातिस्मृतिः प्रभुः । कान्तिभिर्बुद्धिभिस्तेषु मनुष्येष्वधिकोऽभवत् ॥१४३॥ (चतुर्भिः सम्बन्धः)
अकालमृत्युराद्योऽभूद् बालस्तालफलाहतः । कन्या कुलकृता पत्नी, वृषभस्येति रक्षिता ॥ १४४ ॥
भोगयोग्यं विभुं ज्ञात्वा, हरिरेत्य वरक्रियाम् । देव्यो वधूक्रियां चक्रुः, सुमङ्गला–सुनन्दयोः ॥ १४५ ॥
प्रभोः षट्पूर्वलक्षेषु, युग्मयुग्मं गतेष्वभूत् । क्रमेण भरत-ब्राह्म्यौ, सौनन्देयश्च सुन्दरी ॥ १४६ ॥
पराण्येकोनपञ्चाशतमसूत सुमङ्गला । युग्मान्यतिक्रमे नीतेः कथनं वृषभस्य च ॥ १४७ ॥
दण्डं करोति राजेति, शिष्टं ते प्रोचुरस्तु सः । ब्रूध्वं कुलकृतं सोऽवगस्तु वो वृषभः प्रभुः ॥ १४८ ॥
समयज्ञः समेत्येन्द्रो, राज्यस्नात्रमसूत्रयत् । राजार्हमुकुटादींश्चालङ्कारान् न्यस्तवांस्तनौ ॥ १४९ ॥
राज्यस्नात्रकृते नीरमानीय नलीनीदलैः । युग्मिनोऽप्यागता नाथं, ददृशुर्भूषितं भृशम् ॥ १५० ॥
माऽऽपत् क्लेदमिदं वस्त्राद्यचर्यत्वात् प्रभुपादयोः । चक्रुः पत्राम्बुभिः पूजां, शिक्षयेत् कः सतां नयम् ? ॥ १५१ ॥
विनीताः साध्वमी मर्त्या, इतीन्द्रोऽन्वर्थसूचकाम् । स्थापनां तु विनीतायाः पुर्यास्तस्यां भुवि व्यधात् ॥ १५२ ॥
कुञ्जराश्व–गवादीनां, राज्यार्थं सङ्ग्रहोऽभवत् । तथोग्र–भोग–राजन्य–क्षत्रियाणां क्रमोऽपि च ॥ १५३ ॥
आरक्षकार्यमित्राणि, जज्ञिरे क्षत्रियाः परे । इत्यादिसङ्ग्रहं कृत्वा, साम्राज्यं बुभुजे विभुः ॥ १५४ ॥
कन्द–मूल–दलाहारास्तथा पुष्प–फलाशिनः । बभूवुर्मनुजा नाभिसूनुः कुलकरो यदा ॥ १५५ ॥
आसन्निक्षुभुजः पूर्वे, मुख्येनेक्ष्वाकवो ह्यमी । शणसप्तदशं सस्यं, भुञ्जते चाममेव ते ॥ १५६ ॥

तस्मिन्नजीर्यमाणेऽन्ने, युग्मिनः प्रभुमैयरुः । प्रभुणाऽभाणि भुञ्जीध्वं घृष्ट्वा हस्तेन निस्तुषम् ॥ १५७ ॥
न जीर्यति तथाप्येतत् ततस्तेऽस्य पभूक्तितः । घर्षणं तीमनं हस्तदोर्मूले तापनं व्यधुः ॥ १५८ ॥
कालस्य मध्यमत्वेनोत्पेदेऽग्निर्वृक्षघर्षतः । भुञ्जतां पक्वमन्नान्नं, ज्ञानात् ज्ञात्वाऽऽह तान् प्रभुः ॥ १५९ ॥
प्रक्षेप्य दाहाच्चौपध्या गजारूढप्रभोः पुरः । युग्मिनः प्राहुरस्मभ्यं, ददाति स न किञ्चन ॥ १६० ॥
विज्ञायावसरं स्वामी, तानाहाऽऽनीयतां हि मृत् । तदादौ तं गजेन्द्रस्य, कुम्भं कुम्भस्थलेऽकरोत् ॥ १६१ ॥
कृत्वा प्रत्याह तानेप, स्थानान्येतादृशानि भोः !। निर्माय पक्वमन्नान्नं, भुञ्जतां तनुपुष्टये ॥ १६२ ॥
एवं लोह-धट-क्षौर-चित्रचीवरकारिणाम् । शिल्पान्येकस्य चैकस्य, विंशतिर्विंशतिर्भिदः ॥ १६३ ॥
कर्माणि कृपिवाणिज्यादीनि लोकाय चादिशत् । कर्मानाचार्यकं शिल्पं, स्यादाचार्योपदेशजम् ॥ १६४ ॥
ब्राह्म्या दक्षिणहस्तेनाशिक्षयताक्षरावलीम् । सुन्दर्या वामहस्तेन, गणिताङ्कांश्च नाभिभूः ॥ १६५ ॥
चतुःषष्टिर्गुणान् स्त्रीणां, रूपं कर्म तथार्पभेः । बाहुबलेर्लक्षणानि, नरादीनामदर्शयत् ॥ १६६ ॥
तांस्तन्नामाङ्कुगे देशे, पुत्रान् राज्ये न्यवीविशत । सर्वलोकोपकाराय, यज्जन्माथार्हतां भवेत् ॥ १६७ ॥
त्रिपष्टिं पूर्वलक्षाणि, राज्यं पालयतोऽत्यगुः । ईयुर्लोकान्तिका देवाः, कल्पतः कल्पतस्त्वथ ॥ १६८ ॥
जय त्वं नन्द भ॑ ते, क्षत्रियवृपभास्तु ते । धर्मेऽविघ्नं धर्मतीर्थे, तीर्थनाथ ! प्रवर्त्तय ॥ १६९ ॥
बोधयन्तीत्यादिवाग्भिः, स्वयम्बुद्धमपि प्रभुम् । बन्दिनः प्रातराशीर्भिर्जागरूकमिवाधिपम् ॥ १७० ॥
प्रारेभे वार्पिकं दातुं, धनदानीतशेवधेः । ईप्सितं दानमर्थिभ्यः, स्वयमावालभोजनम् ॥ १७१ ॥

त्रीणि कोटिशतान्यष्टाशीतिकोटीः करार्पितम् । साशीतिलक्षका वर्षे, दानमेतज्जगद्गुरोः ॥ १७२ ॥
अथो चैत्रासिताष्टम्यां, षष्ठेनाऽह्नोऽन्तिमेंऽशके । शिविकां सुदर्शनाख्यां, त्यक्त्वा सिद्धार्थकानने ॥ १७३ ॥
चतुःसहस्रैर्भूपानां, सहाशोकतरोस्तले । देवदूष्यधरो धीरः, प्राव्राजीद् वृजिनोज्झितः ॥ १७४ ॥ युग्मम् ॥
चतुःसहस्राः कच्छाद्या, लोचं कृत्वा स्वयं नृपाः । करिष्यति यथा नाथः, करिष्यामो वयं तथा ॥ १७५ ॥
इति ध्यात्वाऽन्वगुर्नाथं, व्युत्सृष्ट-त्यक्तविग्रहः । पुरं ग्राममनुग्रामं विजहारेशिताऽपि हि ॥ १७६ ॥
न जानाति जनो भिक्षा, का ? के भिक्षाचरा ? इति । कच्छाद्या अलभमानास्तां, बभूवुस्तापसा वने ॥ १७७ ॥
नमिर्विनमिरागत्याऽऽहतुरत्रान्तरे प्रभो ! । चारित्रावसरे प्राप्तमावाभ्यां किञ्चिदेव न ॥ १७८ ॥
इदानीमपि तद् देहीत्युक्त्वा सेवां प्रचक्रतुः । कायोत्सर्गस्थभूशुद्धि-पयःसेकादिभिर्भृशम् ॥ १७९ ॥
धरणेन्द्रोऽन्यदाऽऽयातो, वन्दितुं तौ तथास्थितौ । वीक्ष्याह कथमर्हन्तं, सेवाथे ? स्वार्थमाहतुः ॥ १८० ॥
नीरागोऽयं महाभागो, निग्रहानुग्रहौ न च । कुरुते युवयोरेतद् राज्यं ददे मनोहरम् ॥ १८१ ॥
पुरान् पञ्चाशतं षष्टिं, वैताढ्ये दक्षिणोत्तरे । संस्थाप्य स्थीयतां श्रेणौ, सुखेनेत्याह नागराट् ॥ १८२ ॥
अष्टाचत्वारिंशद् विद्यासहस्रान् स तयोर्ददौ । महतां पादसेवा हि, सत्या रात्यं फलेग्रहिः ॥ १८३ ॥
स्वामिभक्तिफलं स्वस्य, दर्शयन्तौ पितॄन् प्रति । तौ परिच्छदमादाय, सद्यो वैताढ्यमीयतुः ॥ १८४ ॥
वर्षं यावन्निराहारो, दैन्यहीनः प्रभुर्भ्रमन् । वस्त्राभरण-कन्याभिश्छत्राद्यैश्च निमन्त्र्यते ॥ १८५ ॥
क्रमाद् गजपुरं प्राप्तो, वर्षान्ते विहरन् प्रभुः । यत्र बाहुबलेः पौत्रः, सोमप्रभनृपाङ्गजः ॥ १८६ ॥

श्रीश्रेयांसकुमारः सोऽद्राक्षीत् स्वप्ने सुराचलम् । श्यामलं तं पुनर्दीप्तं, धौतं पीयूषभृद्घटैः ॥ १८७ ॥
सुबुद्धिश्रेष्ठ्यप्यैक्षिष्ट, सूर्यं स्थानाच्च्युतं ततः । आरोपितं कुमारेण, सोमप्रभनृपोऽप्यमुम् ॥ १८८ ॥
पुमानेको महाकायः, परानीकपराजितः । कुमारकृतसाहाय्यः, स्वस्थोऽभूत् सुतरामसौ ॥ १८९ ॥
आस्थाने तेऽमिलन् स्वप्नं, शशंसुः स्वं स्वमीक्षितम् । न जाने परमस्याद्य, लाभो भावीति राड् जगौ ॥ १९० ॥
श्रुत्वेत्युत्थाय श्रेयांसः, स्वगवाक्षमशिश्रयत् । प्रभुं गोचरचर्यायां, भ्रमन्तं वीक्ष्य दध्यिवान् ॥ १९१ ॥
मूर्च्छितो लब्धचैतन्यो, जातिस्मृतिमवाप्तवान् । स्मृतदानविधिः पूर्वाभ्यासाद् गेहादवातरत् ॥ १९२ ॥
तावद् गेहाङ्गणं प्राप्तः, कल्पद्रुर्जङ्गमः प्रभुः । कुमारप्राग्भवाचीर्णपुण्यनुन्नः प्रसन्नदृक् ॥ १९३ ॥
तदोपदागतेनेक्षुरसेन प्रत्यलाभयत् । भगवान् पाणिपात्रेण, निर्दोषं तमपारयत् ॥ १९४ ॥ (त्रिभिः सम्बन्धः)
रत्नवृष्टिरहोदानोद्घोषो दुन्दुभिवादनम् । चेलोत्क्षेपः सुरापातः, पञ्च दिव्यानि जज्ञिरे ॥ १९५ ॥
प्रभुणाऽपारि यैः पादैस्तत्र पीठमचीकरत् । जनो मा क्रामति पदैरित्यवज्ञाऽऽस्पदच्छिदे ॥ १९६ ॥
अपूपुजत् स तच्छ्रद्धदेवं प्रभुरपारयत् । यत्र तत्र जनः पीठं, चक्रे प्रावाहिको हि सः ॥ १९७ ॥
तदर्कमण्डलमिति, ख्यातं कालेऽर्चितं जनैः । प्रभुस्तक्षशिलापुर्यां, विहरन्नन्यदा ययौ ॥ १९८ ॥
निवेदनं बाहुबलेर्यास्यामीत्यतिविस्तरात् । विजहार प्रभुः प्रातर्ह्यनियतस्थितिरीदृशाम् ॥ १९९ ॥
प्राप्तः प्रातः शुचा क्रान्तो, मा शोचीर्मन्त्र्यवक् प्रभो ! । अर्च्यत्वात् पादयोस्तीर्थं, धर्मचक्रं कुरु त्विह ॥ २०० ॥
बहली–सुवर्ण–भूम्यादिदेशेषु भ्रमताऽर्हता । प्रापुर्भद्रकतां केचित्, म्लेच्छा अप्यनुशिक्षिताः ॥ २०१ ॥

आद्यस्तीर्थकृतां वर्षसहस्रं मौनमुद्रया । विहृत्यानुपसर्गेण, पुरे पुरिमतालके ॥ २०२ ॥
शकटास्यवने कृष्णैकादश्यां फाल्गुनस्य च । पूर्वाह्णे वटवृक्षाधोऽष्टमेन प्राप केवलम् ॥ २०३ ॥ युग्मम्
चक्रुश्चतुर्विधाश्चैत्य धर्मसद्म दिवौकसः । पुर्यन्तः शस्त्रशालायां, चक्रस्योत्पत्तिरप्यभूत् ॥ २०४ ॥
आर्षभेरागता वर्द्धापनिका युगपद् द्वयोः । प्राक् पूजयामि किं चक्रं ? तातं वा ? ह्यचिन्तयत् ॥ २०५ ॥
धिग् धिग् मां कदभिप्रायं, यच्चक्रमिहलौकिकम् । ताते हि पूजिते चक्रं स्वयमेवार्चितं भवेत् ॥ २०६ ॥
इतश्च प्राग् विभोर्दीक्षादानदूनमना मनाक् । त्वमूर्जस्वलसाम्राज्यश्रियंःश्रयसि मत्सुतः ॥ २०७ ॥
वने वनेचर इवैकाकी भ्रमति नित्यशः । मरुदेवाऽङ्गजस्नेहाद्, भरतस्योक्तवत्यभूत् ॥ २०८ ॥ युग्मम् ॥
निजाङ्गजस्य जननि ! श्रियं पश्यैत्य साम्प्रतम् । इत्युक्त्वा सिन्धुरस्कन्धे, तामारोप्याग्रतोऽचलत् ॥ २०९ ॥
शोकध्यामलनेत्राया, दृष्टिरुद्घटिता द्विधा । छत्रातिछत्रं पश्यन्त्या मरुदेव्या विभोस्तदा ॥ २१० ॥
उत्पन्नकेवला पूर्णायुष्का मोक्षमगाच्च सा । सिद्धः प्रथम इत्यस्याश्चक्रेऽर्चा निर्जरैस्तनोः ॥ २११ ॥
जगाम भरतो धर्मसद्मार्हद्धर्मदेशनाम् । निशम्य सम्यगादत्त, श्रावकद्वादशव्रतीम् ॥ २१२ ॥
ऋषभसेन–मरीचिमुख्याः पञ्चशती सुताः । सप्ताऽऽर्षभेः पौत्रशती जगृहुर्ब्राह्म्यपि व्रतम् ॥ २१३ ॥
सुन्दर्या वारणं चक्रे, चक्री स्त्रीरत्नमित्यतः । पूर्वात्तगणभृद्गोत्रो, गणभृद्वृषभोऽभवत् ॥ २१४ ॥
पुण्डरीकाख्यया ख्यातस्तथाऽन्ये गणधारिणः । स्थापिताश्चतुरशीतिः, स्वहस्तेनाऽऽदिमाऽर्हता ॥ २१५ ॥
सहस्राश्चतुरशीतिः, साधूनां सर्वसंख्यया । लक्षत्रयं तु साध्वीनामजिह्मब्रह्मवर्चसाम् ॥ २१६ ॥

श्रावकाणां तिस्रो लक्षाः, सहस्राः पञ्च चाभवन् । श्राद्धीनां चतुःपञ्चाशत्सहस्रा लक्षपञ्चकम् ॥ २१७ ॥
सहस्राः पञ्च पादोनाः स्युश्चतुर्दशपूर्विणाम् । ते विंशतिः केवलिनामवधिज्ञानिनां नव ॥ २१८ ॥
षट्शती वैक्रियवतां, विस्तीर्णमति-वादिनाम् । सार्द्धानि षट् शतानि स्युः, सहस्रा द्वादश क्रमात् ॥ २१९ ॥
द्वाविंशतिसहस्राः स्युरनुत्तरोपपातिनाम् । शतानि नव चेत्येष, विशेषोऽर्हत्परिग्रहे ॥ २२० ॥
आर्षभिर्भरतक्षेत्रं, साधयित्वाऽखिलं बलात् । षष्टिवर्षसहस्रेण, निजं पत्तनमीयिवान् ॥ २२१ ॥
चक्रे चक्रित्वाभिषेकोऽस्य भूपैर्द्वादशाब्दिकः । बन्धून् सर्वांश्च सस्मार, भ्रातृंस्तत्राप्यनागतान् ॥ २२२ ॥
ततो दूतमुखेनाऽऽह्वाष्टानवत्यनुजन्मनः । समेत्य भ्रातरः सेवां, कुर्वन्तु मम साम्प्रतम् ॥ २२३ ॥
तेऽपि तद्वचसा क्रुद्धा, दण्डस्पृष्टा इवोरगाः । दध्युः कथमनात्मज्ञः, सोऽस्मान् हा ! सेवकीयति ? ॥ २२४ ॥
पितरं राज्यदातारं, पृच्छामस्तदुपास्तये । ध्यात्वेति सर्वे सम्भूय, सम्प्रापुः पितुरन्तिकम् ॥ २२५ ॥
प्रभुणाऽभाणि भो भद्राः !, अनुत्तरसुरेष्वलम् । पूर्वं स्मरत यद् भुक्तं, सुखं विषयनिस्तुषम् ॥ २२६ ॥
तुच्छासारैः सुखैरेभिः, कियतीं तृप्तिमाप्स्यथ । अङ्गारकारकस्येव ?, कोऽसावीशेति कथ्यताम् ॥ २२७ ॥
प्रभुराह पुरा कश्चिद् दृतिमात्रपयाः पुमान् । जगामाङ्गारकान् कर्त्तुं, दृष्टकाष्ठाकुले वने ॥ २२८ ॥
ग्रीष्मातिरेकतः सूर्य-वह्नितापात् तृषार्दितः । पीत्वा पयोऽखिलं सोऽगाद् वेगाद्, गेहं मुमूर्च्छ च ॥ २२९ ॥
स्वप्ने पयः पयोराशि-नदी-कूप-नदोद्भवम् । पीत्वाऽप्यतृप्तो जीर्णैकमनूपं कूपमैक्षत ॥ २३० ॥
तृणपूलकलग्नाम्बुबिन्दून लिहन् स जिह्वया । कथं तृप्यति भो भद्राः ! ?, भवन्तोऽप्येवमेव हि ॥ २३१ ॥

तथा सूत्रकृतो वैतालिकाध्ययनदेशनात् । प्रबुद्धा जगृहुर्दीक्षां, सन्तो हि सफलोद्यमाः ॥ २३२ ॥
चक्री चक्रमथादाय, विनीतायामुपागतः । चक्राप्रविशने हेतुं, पुनः पप्रच्छ मन्त्रिणः ॥ २३३ ॥
तेऽप्याहुरजिते शत्रावेकस्मिन् प्रविशेन्न तत् । कथमस्त्यजितः कोऽद्याप्याहुर्बाहुबलीति ते ॥ २३४ ॥
ततो दूतं सुवेगाख्यं, प्राहिणोदनुजन्मने । सोऽपि गत्वा जगादैवं, त्वामाह्वयति चक्रभृत् ॥ २३५ ॥
किमर्थमात्मसेवयै, बली बाहुबली जगौ । आः पापं ! स च पापीयानियतापि न तृप्यति ॥ २३६ ॥
मत्तो मत्तोऽपि शुश्रूषां, सिंहान्मृग इवेहते । जानाति स यथा पूर्वं, ग्राहिता भ्रातरो व्रतम् ॥ २३७ ॥
तथैनं ग्राहयिष्यामि तव भीषिकयेति तत् । ते कपित्था न चाल्यन्ते, मरुता ये परे वयम् ॥ २३८ ॥
सावष्टम्भमभाषिष्टित्येवं दूतपुरो वचः । उपेक्षितोऽसि दूतत्वाद् याहि याहि म्रियस्व मा ॥ २३९ ॥
वक्तव्यं स्वप्रभोरग्रे, मा कार्षीर्बहलीपतेः । आशां स्वप्नेऽपि सेवाया, युद्धश्रद्धा यदेहि तत् ॥ २४० ॥
सर्वं तदुक्तमेत्याख्यद् दूतश्चक्रिण आनतः । सोऽपि कोपप्रकोपेण, यात्राभम्भामवादयत् ॥ २४१ ॥
चतुरङ्गचमूचक्राक्रान्तभूर्भरतेश्वरः । बहल्या एत्य सीमानं, तस्थौ स्वस्थमना मनाक् ॥ २४२ ॥
तमागतं निशम्याशु, बलिष्ठो बहलीपतिः । स्वपुर्या निर्ययौ वर्यतूर्यसूचितदोर्जयः ॥ २४३ ॥
रणकण्डूलदोर्दण्डा, अवतेरू रणाङ्गणे । स्वस्वेशवर्द्धि[विहि]तोत्साहा, योद्धारः सैन्ययोर्द्वयोः ॥ २४४ ॥
आर्षभिर्जनसंहारं, वीक्ष्योचे चक्रवर्त्तिनम् । कथं निरपराधानां वधो बन्धो ! विधीयते ? ॥ २४५ ॥
मिथोऽस्ति ह्यावयोर्वैरं, तेनान्योन्यं रणोऽस्तु नौ । चक्रिणाऽप्यनुमेने तदेकैव सुधियां हि धीः ॥ २४६ ॥

ततो योद्धुं प्रवृत्तौ तौ, गजाविव मदोत्कटौ । जितः सर्वत्र तेनासौ, दृग्-वाग्-दोर्दण्ड-मुष्टिषु ॥ २४७ ॥
त्रपयाऽधोमुखश्चक्री, सौनन्देयेन जल्पितम् । किञ्चिद् विनष्टं नाद्यापि, याहि भुङ्क्ष्व निजां श्रियम् ॥ २४८ ॥
ज्वलंस्तयाऽधिकं वाचा, घृतसिक्त इवानलः । चक्री योद्धुमढौकिष्ट, धिगन्धकरणं क्रुधम् ॥ २४९ ॥
तस्य मुक्तानि शस्त्राणि, बहलीशे वृथाऽभवन् । वज्रासारगिरौ दन्तप्रहारा इव दन्तिनः ॥ २५०॥
कथं चक्रीत्यसौ चित्ते, सन्दिहानस्य चक्रिणः । विद्युदुद्योतवद् दीप्रं, चक्रं करमशिश्रयत् ॥ २५१ ॥
तदाप्य हृष्टतुष्टात्मा निधानमिव निर्द्धनः । प्राह बाहुबलिन् ! याहि, भ्रातृघावकपातकम् ॥ २५२ ॥
मा देहि भुङ्क्ष्व साम्राज्यं, स्वीकृत्याज्ञां परं मम । पश्चात् पश्चात्तापमाप्स्यसीति चेतसि चिन्तय ॥ २५३ ॥ युग्मम्
स्मित्वेषदार्षभिः प्रोचे, क्रोधान्धो धरणीधवम् । मुग्ध ! दुग्धमुखास्माकं, मा दर्शय बिभीषिकाम् ॥ २५४ ॥
मुञ्चामुं लोहखण्डं स्वं, खण्डीकुर्वे स्वमुष्टिना । सोऽमुचच्चक्रमित्युक्ते, हाहारवपरे जने ॥ २५५ ॥
गोत्रे प्रभवतीदं नो, स्पृष्ट्वोरःस्थलमार्षभेः । पश्चादागत्य हस्तस्थं तदभूच्चक्रवर्त्तिनः ॥ २५६ ॥
सचक्रं चूर्णयाम्येनं, मुष्टिमुत्पाट्य धावितः । अत्रान्तरेऽन्तरायाय, बभूव भवितव्यता ॥ २५७ ॥
आः ! पापारम्भसंरम्भः, कोऽयं मे साधुगर्हितः ? । स्मृत्वेति सद्भिरारब्धं, नान्यथेति स्वमुष्टिना ॥ २५८ ॥
उत्पाट्य स्वशिरःकेशान्, क्लेशानिव महाव्रती । व्रतमादाय तत्रास्थान्मानी प्रतिमयाऽऽर्षभिः॥२५९॥ (त्रिभिः सम्बन्धः)
मुक्त्वा मानं नतश्चक्री, मा मुञ्चैकाकिनं च माम् । इत्युक्तोऽप्यब्रवीन्नासौ, मेरुवद् ध्याननिश्चलः ॥२६०॥
ततस्तदङ्गजन्यस्तराज्यश्चक्री गृहं गतः । बुभुजे चक्रिणो भोगानेकच्छत्रां विधाय गाम् ॥ २६१ ॥

वर्षान्ते भाषिते ब्राह्मी-सुन्दर्यौ नाभिजन्मना । भवतीभ्यां वचो वाच्यं, गत्वाऽदो बहलीपतेः ॥ २६२ ॥
गजादवतरेतीशादेशमासाद्य ते गते । व्याप्तं वल्लीवितानेन, पश्यतः स्म न तं वने ॥ २६३ ॥
पश्चादेत्य प्रभोरग्रेऽथाहतुस्तत्र नो मुनिः । आस्ते तत्रैव सेत्युक्ते, ते गत्वोचतुरुच्चकैः ॥ २६४ ॥
गजादवतर भ्रातः !, तत्रस्थस्य न केवलम् । दध्यौ बाहुबली साध्व्यौ, कथं कथयतो मृषा ? ॥ २६५ ॥
सर्वसङ्गपरित्यागवतो मे क्वाऽस्ति कुञ्जरः ? कुत्रत्यस्तु तदारोहः ? सीमा ग्रामं विना कुतः ? ॥ २६६ ॥
ज्ञातं मानगजारूढं धिग् मां दुश्चिन्तिताग्रिमम् । वन्देऽथापि लघून् भ्रातॄनित्युक्त्वोत्पाटितः क्रमः ॥ २६७ ॥
तदा केवलमुत्पेदे, गत्वाऽर्हद्धर्मसद्मनि । स नमस्तीर्थायेत्युक्त्वाऽऽसीनः केवलिपर्षदि ॥ २६८ ॥
अथान्यदाऽऽर्षभिर्भृत्वाऽनांसि भूयांसि संस्कृतैः । भोज्यैर्न्यमन्त्रयद् भ्रातॄन्, क्षमाश्रमणपूर्वकम् ॥ २६९ ॥
प्रभुरप्यभ्यधादभ्याहृताधाकर्मदूषितः । राजराज ! राजपिण्डोऽप्यकल्प्योऽयं महात्मनाम् ॥ २७० ॥
तातेन सर्वथा त्यक्त इति दुःखार्त्त आर्षभौ । अत्रान्तरेऽवग्रहाणां, स्वरूपं पृष्टवान् हरिः ॥ २७१ ॥
कियन्तोऽवग्रहाः स्वामिंस्ते च पञ्चेत्यवक् प्रभुः । इन्द्र-राड्-गृहपत्याद्या, वज्र्याह सोऽर्पितो मया ॥ २७२ ॥
विश्राणितो मयाऽप्येष इत्याख्यद् भरतप्रभुः । स्वेच्छया साधवः सर्वे, मद्भूमौ विहरन्त्यथ ॥ २७३ ॥
दर्शिता मौलरूपस्य, शक्रेण चक्रिणोऽङ्गुली । अष्टाह्निकामहस्तेने, तेन सेन्द्रोत्सवोऽभवत् ॥ २७४ ॥
अनादानेन चान्नस्य, खिद्यमानं नरेश्वरम् । वीक्ष्योचे वासवश्चक्रिन् !, पूजयस्व गुणाधिकान् ॥ २७५ ॥
स दध्यौ ते तु मुनयः आ ! ज्ञातं श्रावका अपि । वसनैरशनैश्चापि, तेनैतानर्चयाम्यहम् ॥ २७६ ॥

ततो भोजयितुं लग्नश्चतुर्वेदार्थवेदिनः । अतिभूयस्त्वतः सूदाः, सादादूचुरथैत्य तम् ॥ २७७ ॥
निर्वहत्यधिकारोऽयमस्माभिर्नेश ! साम्प्रतम् । तन्निशम्य तदाकार्य, चक्री पप्रच्छ तानिति ॥ २७८ ॥
को देवः ? को गुरुर्धर्मः ?, को वस्तद्वेदिनां पुनः(रः) । रत्नत्रयाङ्कं काकिन्या, चक्री रेखात्रयं व्यधात् ॥ २७९ ॥
षष्ठे षष्ठे पुनर्मासे तत्त्रिकप्रश्नपूर्वकम् । स्थाप्यन्ते तेऽपि तत्पङ्क्तौ, न दम्भो महतां हृदि ॥ २८० ॥
जितो भवान् वर्द्धते भीस्तस्मान्मा हन मा हन । प्रमत्तं नृपमित्युक्त्वा, बोधयन्तीति तत्स्थितिः ॥ २८१॥
एवं तदन्वये भूपैः, पाश्चात्यैः पूजिताश्च ते । अभिज्ञानाय रुक्मादियज्ञोपवीतदायिभिः ॥ २८२ ॥
कालान्तरे बभूवुस्ते, सद्गुरूणामभावतः । विपर्यस्तधियो विप्राः, स्युः कियन्त्यो गुरून् विना ? ॥ २८३ ॥
भगवानादिदेवोऽथ, विहृत्य चिरमुर्वराम् । भारतान्यतरैकोनशतपुत्रैस्तथाऽष्टभिः ॥ २८४ ॥
पौत्रैश्च सममेकेन, समयेनाऽऽयुषः क्षयात् । सिद्धिसौधाग्रमध्यास्त, प्रसिद्धाष्टापदाचले ॥ २८५ ॥ युग्मम्
तत्र वर्धकिरत्नेन, चक्री चैत्यमचीकरत् । मानाद्युपेताः प्रतिमाश्चतुर्विंशतिरर्हताम् ॥ २८६ ॥
साधर्मिकाणां वात्सल्यं, कुर्वतोऽर्चयतोऽस्य ताः । व्यर्णीयुरेकसम्राजः, पूर्वाणीत्थं कियन्त्यपि ॥ २८७ ॥
अन्यदाऽऽदर्शगेहान्तः, स्वं रूपमवलोकयन् । आससादाविषादेन, परमानन्दसम्पदम् ॥ २८८ ॥
पपाताथ ठ(ट)णत्काराद‌ङ्गुलीतोऽङ्गुलीयकम् । तां विलोक्य गतश्रीकां, लूनपुष्पां लतामिव (इव स्रजम्) ॥ २८९ ॥
क्रमान्मुमोच सर्वस्मादङ्गादाभरणान्यसौ । काष्ठशेषं वृक्षमिवात्मानं वीक्ष्य व्यचिन्तयत् ॥ २९० ॥
अहो ! आगन्तुकैरेभिर्भूषणैर्भूष्यतेऽङ्गकम् । नामुष्य मुख्यवृत्त्याऽस्ति, किञ्चित् प्रेमानुबन्धनम् ॥ २९१ ॥

इत्युग्रभावनायोगाद् भगवान् भरतेश्वरः । आरुह्य क्षपकश्रेणीमाप निष्पापकेवलम् ॥ २९२ ॥
विधिनाऽवधिना ज्ञात्वा, हरिरेत्य तमब्रवीत् । गृहाण यतिनो लिङ्गं, कुर्मस्ते केवलोत्सवम् ॥ २९३ ॥
आत्तलिङ्गश्चिरं पृथ्वीं, विहृत्याऽऽर्षभिकेवली । आससाद महानन्दपदमष्टापदाचले ॥ २९४ ॥
इति चरितमुदारं श्रीयुगादीश्वरस्य, निजहृदि परिभाव्य प्रीतिभाजो भवेयुः ।
जगति मदनजेतुर्धर्मकर्मैकहेतु, प्रकटितजननीतेस्त्यक्तसंसारभीतेः ॥ १५९ ॥

इति श्री मुद्रितऋषिमण्डलप्रकरणवृत्ति पृष्ठाङ्क १-१० तः उद्धृतं

## इति श्री ऋषभदेवचरित्रम् संपूर्णम्

## २ देवाधिदेवतीर्थंकर—श्री शान्तीनाथजिनचरित्रम्

अथ मेघरथश्च्युत्वा, जम्बुद्वीपेऽत्र भारते । श्रीहस्तिनापुरे विश्वसेनराज्ञः प्रियाऽचिरा ॥ १ ॥
नभस्यकृष्णसप्तम्यां, तस्याः कुक्षौ सुतत्वतः । चतुर्दशमहास्वप्नसूचितश्चोदपद्यत ॥ २ ॥ युग्मम् ॥
साधिकान् नवमा (नव मासांश्च) सान् सा, कुक्षौ धृत्वेन्द्रसंस्तुतम् । ज्येष्ठकृष्णत्रयोदश्यां, सुषुवेऽर्द्धनिशि प्रभुम् (सुतम्) ३
ततश्च दिक्कुमारीभिः, सूतिकर्मास्य निर्ममे । जन्माभिषेकः स्वर्णाद्रौ सर्वैरिन्द्रैरपि क्रमात् ॥ ४ ॥
गर्भस्थेऽस्मिन् रुजः शान्तिर्जातेति जनकः प्रभोः। सवर्द्धापनकं नाम, यथार्थं शान्तिरित्यदात् (हि शान्तीत्यदात्) ५

क्रमेण प्राप्ततारुण्यं, जातपाणिग्रहोत्सवम् । शान्तिं न्यस्याङ्गजं राज्ये, पार्थिवोऽशिश्रयद् व्रतम् ॥ ६ ॥
चतुर्दशभिरुत्पन्नै रत्नैर्भरतभूतलम् । प्रसाध्य बुभुजे भोगान्, श्रीशान्तिश्चक्रिणश्चिरम् ॥ ७ ॥
स्वयम्बुद्धोऽपि लोकान्तिकैः (क-) सुरैरेत्य बोधितः । भव्योर्वीं दानधाराभिरावर्षमभिवृष्य च ॥ ८ ॥
ज्येष्ठकृष्णचतुर्दश्यां, विहाय तुपमुष्टिवत् । चक्रिभोगानुपादत्त, प्रव्रज्यां परमेश्वरः ॥ ९ ॥ युग्मम् ॥
चतुर्ज्ञानी विहारेणोद्यतेन विहरन् विभुः । पौषशुद्धनवम्यह्नि, केवलज्ञानमाप सः ॥ १० ॥
देवैर्धर्मगृहं चक्रे, प्रभुणा धर्मदेशना । प्रबुद्धाः प्राणिनोऽनेकेऽभूवन् गणभृतोऽपि च ॥ ११ ॥
क्रमेण क्षीणकर्मांशो, विहृत्य चिरमुर्वराम् । ज्येष्ठकृष्णत्रयोदश्यां, सम्मेतेऽशिश्रयच्छिवम् ॥ १२ ॥
बाल्य-मण्डलि-चक्रित्व-श्रामण्येष्वभवन् क्रमात् । पृथक् पृथक् सहस्राणि, वर्षाणां पञ्चविंशतिः ॥ १३ ॥
वर्षलक्षमतिवाह्य यः प्रभुः, सर्वमायुरनु मोक्षमासदत् । सोऽस्तु शस्तकृदपास्तपाप्मनां, वासवस्तवनगोचरीकृतः ॥१४॥

इति श्री मुद्रितऋषिमण्डलवृत्ति पृष्ठाङ्क २९ तः उद्धृतं

## इति श्री शांतिजिनचरित्रम् संपूर्णम्

## ३ देवाधिदेवतीर्थंकर–श्री कुन्थुनाथ चरित्रम्

श्रीहस्तिनापुरे सूर-श्रीदेव्योस्तनयोऽजनि । चतुर्दशाद्भुतस्वप्नसूचितात्यन्तिकोदयः ॥ १ ॥

कुस्थो(न्थो)रत्नमयः स्तूपः, कुन्थुवद् वीक्षिताः परे । गर्भस्थेऽस्मिन् जनन्येति कुन्थु राख्यां पिताऽतनोत् ॥ २ ॥
क्रमेण प्राप्ततारुण्यं, जापामाणिग्रहोत्सवम् । कुन्थुं न्यस्याङ्गजं राज्ये, सूरराड् व्रतमात्तवान् ॥ ३ ॥
चतुर्दशभिरुत्पन्नै रत्नैर्भरतभूतलम् । प्रसाध्य बुभुजे भोगान्, श्रीकुन्थुश्चक्रिणश्चिरम् ॥ ४ ॥
स्वयम्बुद्धोऽपि लोकान्तिकैः सुरैरेत्य बोधितः । भव्योर्वीं दानधाराभिरावर्षमभिवृष्य च ॥ ५ ॥
वैशाखकृष्णपञ्चम्यां, विहाय तृणमुष्ठिवत् । चक्रिभोगानुपादत्त, प्रव्रज्यां परमेश्वरः ॥ ६ ॥
चतुर्ज्ञानी विहारेणोद्यतेन विहरन् विभुः । प्रान्ते षोडशवर्षाणां, केवलज्ञानमासदत् ॥ ७ ॥
देवैर्धर्मगृहं चक्रेऽर्हता धर्मदेशना । प्रबुद्धाः प्राणिनोऽनेकेऽभूवन् गणभृतोऽपि च ॥ ८ ॥
क्रमेण क्षीणकर्मांशो, विहृत्य चिरमुर्वराम् । राधाकृष्णप्रतिपदि, सम्मेतेऽशिश्रयच्छिवम् ॥ ९ ॥
बाल्य–मण्डलि–चक्रित्व–श्रामण्येष्वभवन् समाः । त्रयोविंशसहस्राणि, सार्द्धसप्तशतानि च ॥ १० ॥

इति श्री मुद्रितऋषिमण्डल वृत्ति पृष्ठाङ्क. ३० तः उद्धृतं

## इति श्री कुन्थुनाथचरित्रम् संपूर्णम्

## ४ देवाधिदेवतीर्थंकर–श्री पार्श्वनाथजिनचरित्रम्

जम्बूद्वीपे मेरुपार्श्वे, समभूतलपर्वतः । योजनानां नवसंख्यशतमध्ये ग्रहव्रजाः ॥ १ ॥
ततः परमसंख्याता, यौजन्यकोटिकोटयः । उल्लङ्घितेषु तेषूद्ध्र्वं सौधर्मेशानसद्दिवौ ॥ २ ॥

क्रमेण दशमः स्वर्गःप्राणताख्यः प्रसिद्धिभाक् । आयुषः संस्थितिस्तत्र सागराणां तु विंशतिः ॥ ३ ॥
तदायुषः स्थितिं भुक्त्वा कृत्वा देवभवक्षयम् । अच्युत् स्वर्गतस्तस्मात् पार्श्वजीवो महासुरः ॥ ४ ॥
जम्बूद्वीपो महाद्वीपो, लक्षयोजनविस्तृतः । परिधिस्तस्य विख्याता, सिद्धान्ते तां भणाम्यथ ॥ ५ ॥
परिही तिलक्खसोलससहस्सदोयसयसत्तवीसहिया । कोसतिगट्ठावीसं धणुसयतेरंगुलद्धहियं ॥ ६ ॥
तत्र श्रीभरतक्षेत्रे भरिते भूरिभूतिभिः । पुरं वाराणसीसंज्ञं पुरन्दरपुरोपमम् ॥ ७ ॥
निशम्यते यत्र पुरे तु दण्डः, प्रासादशीर्षे न पुनः प्रजासु । विद्वज्जनानां मनसस्तु चौराः, श्रियाश्च चौरा नहि सन्ति केचित् ॥८॥
प्रासादमूर्द्धः कलशस्थले हि यत्रार्कबिम्बं प्रतिभाति नित्यम् । केतुस्थले स्वर्गनदी मनोज्ञा, किं वर्ण्यते वर्णनमेव तस्याः ॥९॥
अन्याय इति शब्दस्तु शास्त्रेषु, जनतासु नो दातारः प्रचुरा यत्र । याचकाः स्तोकमात्रकाः ॥ १० ॥
तत्राश्वसेनभूपालो, भूपालालिपुरःसरः । प्रजापालनसंसक्तो, राजते सार्वभौमवत् ॥ ११ ॥
रतिवच्चारुरूपाढ्या, सुपौलोमीव सुन्दरा । स्फारलावण्यसंपूर्णा, तिरस्कृततिलोत्तमा ॥ १२ ॥
वामा वामभ्रुवां मध्येऽभिरामा गुणराजिभिः । वामा राज्ञी बभौ तस्य, पट्टराज्ञी शुभाशया ॥ १३ ॥ [ युग्मम् ]
तस्याः कुक्षौ समुत्पेदे, श्रीपार्श्वपरमेश्वरः । राज्ञी ददर्श तद्रात्रौ स्वप्नानि च चतुर्दश ॥ १४ ॥
आद्यस्वप्ने गजो दृष्टो द्वितीये वृषभः शुभः । तृतीये केसरी सिंहो महालक्ष्मीश्चतुर्थके ॥ १५ ॥
पञ्चमे पुष्पमाला च, षष्ठे स्वप्ने हिमद्युतिः । सप्तमे सविता दृष्टो, ध्वजा दृष्टाऽष्टमे तथा ॥ १६ ॥
नवमे कलशः पद्मसर—स्तु दशमे तथा । एकादशे पयःसिन्धुर्द्वादशे सुरमन्दिरम् ॥ १७ ॥

त्रयोदशे रत्नराशि–र्निर्धूमाग्निश्चतुर्दशे । स्वप्नान्येतानि दृष्ट्वा, चाजागरत् सा स्वयं तदा ॥ १८ ॥
मुमोद मनसि स्वप्नान्, तान् सस्मार पुनः पुनः । जिनानां गोत्रदेवीनां नामानि, समुपाददे ॥१९ ॥
समुत्थाय ततः स्थानात् विचरन्ती शनैः शनैः । श्रीअश्वसेनभूभर्तुः, समीपे सा समागमत् ॥ २० ॥
प्राबोधयद्धवं राज्ञी, सुधामधुरया गिरा । राजाऽपि जागरामास, कृत्वाऽऽलस्याङ्गमोटनम् ॥ २१ ॥
पप्रच्छ राजा हे देवि ! साम्प्रतं कथमागता । तदा स्माह मया स्वामिन्, ! सुप्ते वासगृहे वरे ॥ २२ ॥
जाग्रतीपद्वारणादिसुस्वप्नानि चतुर्दश । प्रबुद्धा प्रविलोक्यैवं तत्फलं ब्रूहि मत्पुरः ॥ २३ ॥
दृष्टानि चारुस्वप्नानि, राजा प्राह त्वयाऽनघे ! । आत्मनो भविता पुत्रः, चक्रवर्त्ती जिनोऽथवा ॥ २४ ॥
सत्यमेतदिति प्राह, राज्ञी भूधवसद्धवम् । उररीकृत्य तद्वाक्यं, जगाम निजमन्दिरम् ॥ २५ ॥
प्रातःकाले समाहूताः, पण्डिताः, स्वप्नपाठकाः । तेऽपि प्रोचुस्तथा स्वप्नफल–मेका मतिः सताम् ॥ २६ ॥
नातिरूक्षं नातितिक्तं, नात्युष्णं नातिशीतलम् । भोजनं भोजयामास, स्वगर्भकुशलाय सा ॥२७॥
क्रमेण नवमासानामथ संपूर्णतां गते । उच्चैःस्थितैर्ग्रहैः सर्वैर्निष्पन्ने क्षितिमण्डले ॥ २८ ॥
हेमन्तर्तोर्द्वितीयश्च, मासः श्रीपौषसंज्ञकः । आद्यः पक्षस्ततश्चैव, तस्यैव दशमीतिथौ ॥ २९ ॥
पुत्ररत्नं तदा राज्ञी, सुषुवे सुखकारकम् । बिम्बोष्ठं चन्द्रवद्वक्त्रं नीलपद्मतनुच्छविम् ॥ ३० ॥
लक्षणैर्लक्षितं सम्यक्, कदलीगर्भकोमलम् । सुरासुननरैर्वन्द्यं, श्रीपार्श्वपरमेश्वरम् (युग्मम्) ॥३१॥
तस्मिन्नेव क्षणे भक्त्या चतुःषष्टिः सुरेश्वराः । अमीमिलन् प्रभोर्जन्माभिषेकविधिहेतवे ॥ ३२ ॥

प्रभुं नत्वा स्तवैः स्तुत्वा, गृहीत्वा करसंपुटे । चतुःपष्टिः सुराधीशा, आजग्मुर्मेरुपर्वते ॥ ३३ ॥
मेरुपर्वतचूलायामुपाविश्य जिनेश्वरम् । सौधर्मेन्द्रादयश्चक्रुः स्वर्भूमिनो जननोत्सवम् ॥ ३४ ॥
प्रत्यागताः सुराधीशाः, कृत्वा पार्श्वजिनोत्सवम् । आत्मानं कृतकृत्यार्थं, मन्यमाना मुहुर्मुहुः ॥ ३५ ॥
रूप्यहाटकरत्नानां द्वात्रिंशत्कोटिवृष्टयः । ततो भूपगृहे देवाः पातयामासुराशु ते ॥ ३६ ॥
अथ द्वितीयबालेन्दुरिव बालः प्रभुः स्वयम् । वर्द्धते लालितः शश्वत्, पञ्चाभिर्धातृमातृभिः ॥ ३७ ॥
क्रमेण यौवनं प्राप्तः, श्रीपार्श्वपरमेश्वरः । पित्रा प्रभावतीराज्या विवाहो विहितः प्रभोः ॥ ३८ ॥
अन्येद्युस्तत्पुरीबाह्ये, तापसः कमठः शठः । पञ्चाग्निसाधकः कुण्ठ, आगतोऽज्ञानकष्टकृत् ॥ ३९ ॥
गवाक्षस्थेन पार्श्वेन, सेवकानां तदा मुदा । पृष्टं भोः सेवकाश्चाद्य, कुत्र गच्छन्ति नागराः ॥४०॥
तैः प्रोक्तं युवराजेन्द्र ! तापसः कमठाभिधः । समागतोऽस्ति तं नन्तुं, तत्र लोका व्रजन्त्यमी ॥ ४१ ॥
ऐरावतगजस्पर्द्धिगजमारुह्य सत्वरम् । क्रीडामीषेण पार्श्वोऽपि, तत्पार्श्वे समुपागमत् ॥ ४२ ॥
कुर्वन्नज्ञानकष्टानि प्रभुः प्रोवाच तापसम् । करोषि त्वं मुधाऽज्ञानतपः किल दयांविना ॥ ४३ ॥
प्रत्युवाच प्रभुं सोऽथ, यूयं राजेन्द्रनन्दनाः । वाजिक्रीडाविधौ दक्षा, नास्मत्तापसवृत्तिषु ॥ ४४ ॥
तदा पार्श्वाज्ञया काष्ठमध्यात् भृत्येन सत्वरम् । कुठाराभ्यां द्विधा कृत्वा, न्यकास्यदग्धपन्नगः ॥ ४५ ॥
धिग् धिगस्तु कृतो लोकैस्तापसः कमठः शठः । प्रसंसां पार्श्वनाथस्य लोका विदधिरे मुहुः ॥ ४६ ॥
कियद्वर्षे गतेऽन्येद्युर्विज्ञाय समयं प्रभुः । दत्त्वा संवत्सरीदानं ललौ दीक्षां जिनाधिपः ॥ ४७ ॥

एकदा श्रीजिनाधिशा मूले वटतरोः स्वयम् । कायोत्सर्गस्थिताः सन्ति ध्यानस्तिमितलोचनाः ॥ ४८ ॥
दुर्ध्यानात् कमठो मृत्वा, मेघमाली सुरोऽजनि । उपसर्गे कृते तस्मिन् न चचाल प्रभुर्मनाक् ॥ ४९ ॥
अवाप्य केवलज्ञानं श्रीपार्श्वपरमेश्वरः । भुक्त्वा वर्षशतायुष्कं जगाम शिवमन्दिरम् ॥ ५० ॥

श्री मुद्रितपौषदशमीकथातः उद्धृतं

## इति श्री पार्श्वनाथजिनचरित्रम् संपूर्णम्

## ५ देवाधिदेवतीर्थंकर–श्री महावीरस्वामिचरित्रम्

इतश्च जम्बूद्वीपस्य, भरते धनुराकृतौ । भूरिभूदेवभूदेवकुण्डग्रामाभिधं पुरम् ॥ १ ॥
कोडालगोत्रस्तत्रर्षभदत्ताख्यो द्विजोत्तमः । जालन्धरकुलजाऽस्य, देवानन्देति पत्न्यभूत् ॥ २ ॥ (युग्मम्)
तस्याः कुक्षौ समुत्पेदे, च्युत्वाऽर्द्धनिशि कल्पतः । आषाढसितषष्ठ्यां स, ज्ञानत्रयपवित्रितः ॥ ३ ॥
च्योष्येऽत इति जानाति, च्युतोऽस्मि चेत इत्यपि । च्यवमानो न छद्मस्थस्यैकसामयिकज्ञता ॥ ४ ॥
सा ततस्तादृशे तल्पे, सुखसुप्ता सती सती । चतुर्दश ददर्शेमान्, स्वप्नानद्भुतदर्शनान् ॥ ५ ॥
सिंहेभ-गो रमा-दाम-चन्द्रार्क-ध्वज-कुम्भकाः । पद्मसरोऽब्धिर्विमानरत्नं रत्नोच्चयः शिखी ॥ ६ ॥
दृष्ट्वैतान् हृष्टतुष्टा सा, प्रबुद्धा प्रीतमानसा । हर्षोत्कर्षोल्लसल्लोमराजी राजीवलोचना ॥ ७ ॥

उत्थायोत्कृष्टया गत्या, राजहंसीसदृक्षया । यत्राऽऽस्ते ऋषभदत्तस्तत्रैत्य तमबोधयत् ॥ ८ ॥
सुप्ताऽद्य शयनीयेऽहं, स्वामिन् ! वीक्षितवत्यमून् । तदेषां फलमाख्याहि, बुद्धि-विज्ञानपूर्वकम् ॥ ९ ॥
स विमर्श्याऽऽह देवानुप्रिये ! लाभोऽङ्गजस्य ते । भोगलाभोऽर्थलाभश्च, भावी लाभः सुखस्य च ॥ १० ॥
श्रुत्वेति मुदिता गेहं, गत्वा गर्भं दधत्यसौ । मुहूर्त्तमिव द्वाशीतिर्वासरानत्यवाहयत् ॥ ११ ॥
निष्प्रकम्पमभूत् कम्प्रमथ शक्रस्य विष्टरम् । स ज्ञात्वाऽवधिना जन्मार्हतश्चेतस्यचिन्तयत् ॥ १२ ॥
नेदं भूतं भवेन्नैव, न भविष्यति कर्हिचित् । अर्हच्चक्रि-त्रिखण्डेशादयो यत् पुरुषोत्तमान् ॥ १३ ॥
दरिद्रादिकुलेष्वेवं, नोत्पद्येरन् कदाचन । कर्मोदयदथोत्पन्ना, जायन्ते नेति निर्णयः ॥ १४ ॥ (युग्मम्)
तथाऽयं भगवान् वीर उत्पन्नस्तादृशे कुले । ततो जीतमतीतानागतानां वज्रिणामदः ॥ १५ ॥
कुलेभ्यस्तादृशेभ्यो यदुद्धृत्योत्पादयन्त्यमी । अग्रोग्रादिकुलेष्वेवार्हदादीन् पुरुषोत्तमान् ॥ १६ ॥
ममापीदमतः श्रेय इति सञ्चिन्त्य वासवः । नैगमेषिणमादिक्षदाकार्याग्रसरेश्वरम् ॥ १७ ॥
भो देवानुप्रियादोऽर्हद्वैयावृत्यं कुरूत्तमम् । सद्यस्तदा तदादेशमासाद्य मुमुदेऽसकौ ॥ १८ ॥
ततश्च वैक्रियोद्घातं, कृत्वैत्येशानकूणके । चण्डादिगतिभिर्विप्रकुण्डग्रामाय सोऽचलत् ॥ १९ ॥
एत्यापस्वापिनीं मातुर्दत्त्वा लात्वा करद्वये । निराबाधं न्यधाद् वीरं, स कुक्षौ चेटकस्वसुः ॥ २० ॥
आश्विनाद्यत्रयोदश्यां, चन्द्रे हस्तोत्तरास्थिते । त्रिशलायां स उत्पन्नः, पत्न्यां सिद्धार्थभूपतेः ॥ २१ ॥
देवानन्दा त्रिशला च, तस्यां निशि निजानने । निर्गच्छतः प्रविशतः, स्वप्नांस्ते पश्यतः समम् ॥ २२ ॥

गर्भतः सप्तमे मासे, स्वाम्यभिग्रहमग्रहीत् । उपादेयं मया मातापित्रोर्नो जीवतोर्व्रतम् ॥ २३ ॥
नवमासेऽथ सम्पूर्णे, सार्द्धसप्तदिनोत्तरे । चैत्रशुक्लत्रयोदश्यामिन्दौ हस्तोत्तरानुगे ॥ २४ ॥
मनोऽनुकूलवातेपूच्चस्थानस्थग्रहेषु सः । प्रक्रीडितप्रमुदितावन्यां जनपदोदये ॥ २५ ॥
कन्याराशिः सिंहलक्ष्मा, निशीथेकाञ्चनद्युतिः । जात उत्पादयन् सौख्यं, क्षणं नारकिणामपि ॥ २६ ॥ त्रिभिः सम्बन्धः
इतश्च दिक्कुमारीणामासनानि चकम्पिरे । वितेनुः सूतिकर्माणि, स्वानि स्वान्येत्य भक्तितः ॥ २७ ॥
ज्ञात्वाऽऽसनाकम्पवशादथोच्चकैर्घण्टां सुघोषां हरिरप्यताडयत् । अभूत तदानीं युगपन्निनादाद्वैतं समग्रेषु सुरालयेषु ॥२८॥
विमानमारुह्य महत्प्रमाणमेत्यार्हतो जन्मगृहं जनन्याः । दत्त्वा त्वपस्वापनिकां समीपे, मुक्त्वा तदाकारमुदाररूपम् ॥ २९ ॥
सौधर्मनाथः प्रविधाय पञ्चधाऽऽत्मानं जिनं पाणिपुटे प्रहर्षुलः ।
जन्माभिषेकं विदधे सुराचले, यथाक्रमं सर्वसुरेश्वरैः समम् ॥ ३० ॥ (युग्मम्)
आनीय पश्चादपनीय निद्रामुद्घोषणां वाढरवेण चक्रे । शृण्वन्तु भोः सर्वसुपर्वसङ्घा! विरूपकं नेतुरथास्य मातुः ॥३१॥
ये चिन्तयिष्यन्ति हृदा कदाचित्, तेषां शिरांस्यर्ज्जकमञ्जरीवत् । (युग्मम्)
स्फुटं स्फुटिष्यन्ति किलैवमुक्त्वा, हरिः सुरेन्द्राश्च गता यथागतम् ॥ ३२ ॥
प्रातः प्रवर्द्धापनिकां प्रसिद्धसिद्धार्थराजाय प्रियंवदाऽदात् । सुतावतारं स तदा तदास्याच्छ्रुत्वा ममौ नो मनसि प्रकामम् ॥३३॥
किरीटवर्जामखिलामलङ्कृतिं, दास्यै ददावात्मतनोस्ततो नृपः ।
प्रभातकृत्यानि विधाय कृत्यविदाकार्य कौटुम्बिकपुंस इत्यवक् ॥ ३४ ॥

प्रमृज्य सिक्त्वा मञ्चातिमञ्चोल्लोचाञ्चितं पुरम् । ऊर्ध्वीकृतोरुमुशलं, वद्धचन्दनमालिकम् ॥ ३५ ॥
नैकतालाचराकीर्णं, कुरुत त्वरितं स्वयम् । सर्वं विधाय ते राज्ञः, आज्ञां प्रत्यर्पयन्त्यथ ॥ ३६ ॥
दशाहमहिमारम्भे वर्त्तमाने नृपोऽकरोत् । उच्छुल्कमुत्करं मानवर्द्धनं गुप्ति(वन्दि)मोक्षणम् ॥ ३७ ॥
धात्रीत्वं पञ्चभिर्देवीभिः कुर्वाणाभिरन्वहम् । प्रापोपचयमङ्गेन, स्वामी चामीकरच्छविः ॥ ३८ ॥
किञ्चिदूनाष्टवर्षस्य, सुराणामग्रतः प्रभोः । सद्गुणोत्कीर्त्तनं शक्रः, सुधर्मा(र्म)स्थो व्यधादिदम् ॥ ३९ ॥
बालोऽबालस्वभावोऽसौ, वीरोऽबालपराक्रमः । नैव भापयितुं देवैः, सशक्रैरपि शक्यते ॥ ४० ॥
तत्रैकस्तद्वचः श्रुत्वाऽश्रद्दधानः सुरो हृदि । एति वीरान्तिकं तूर्णं, भापनार्थं निरर्थकम् ॥ ४१ ॥
तले तिन्दुकवृक्षस्य, सर्परूपं विधाय सः । स्थितः परे भयभ्रान्ता, बाला नेशुर्दिशोदिशम् ॥ ४२ ॥
निर्भीको भगवान् नागं, पाणिनाऽऽदाय रज्जुवत् । दयावान् दूरमुत्सृष्टवानवाम(न)मना मनाक् ॥ ४३ ॥
पुनर्विधाय बालस्य, रूपं क्रीडन् सुरो जितः । प्रभुणा तुरगीभूतः प्रभुरप्यारुरोह तम् ॥ ४३ ॥
नभस्युत्पतितो वर्द्धमानो मानोज्झिताङ्गभृत् । सविकारं तदाकारं, विलोक्य प्रभुरप्यथ ॥ ४४ ॥
मुष्टिप्रहारं पृष्ठेऽदात्, ततः संहृत्य कैतवम् । नत्वा वीरं गुणान् गृह्णन्, स्वर्गी स्वर्गं जगाम सः ॥ ४५ ॥
अथाधिकाष्टवर्षं तं, विज्ञाय पितरावपि । कृतकौतुकमाङ्गल्यं, वस्त्राभरणभूपितम् ॥ ४६ ॥
गजारूढं पुरः प्रोद्यन्निनादाद्वैतवन्धुरम् । निन्यतुर्लेखशालायां, गायद्धवलमङ्गलम् ॥ ४७ ॥ युग्मम् ॥
विज्ञायावधिना शक्र, एत्य रूपं द्विजन्मनः । कृत्वाऽऽसनं प्रभोर्योग्यं, स्वयोग्यं चाप्यचीकरत् ॥ ४८ ॥

तत्समक्षं प्रभुं शक्रोऽपृच्छत् सिंहासनस्थितम् । शब्दस्य लक्षणं तथ्यं सर्वं स्वाम्यपि तं जगौ ॥ ४९ ॥
अचिन्तयदुपाध्यायो, मानादपि कणो महान् । यदहो ! वेत्त्ययं बालस्तन्नामापि न वेद्म्यहम् ॥ ५० ॥
तेनावधारितं सम्यक्, सर्वं सद्धारणावता । ततः (प्रभृति जैनेन्द्रं कृतं) प्रवृत्तमत्रादावैन्द्रं व्याकरणोत्तमम् ॥ ५१ ॥
त्यक्तबालोचितावस्थं, क्रमेण प्राप्तयौवनम् । विज्ञाय पितरौ भोगसमर्थं वीरमात्मजम् ॥ ५२ ॥
महदुज्ज्वलकुल्या(ला)याः, शुभे चन्द्रबले तिथौ । राजकन्यायशोदाया, ग्राहयामासतुः करम् ॥ ५३ ॥ युग्मम् ॥
भुञ्जानः पञ्चधा भोगान्, निःस्पृहोऽपि नरोचितान् । प्रियदर्शनाभिधां(ऽऽख्यां)पुत्रीं, स्वानुरूपामजीजनत् ॥ ५४ ॥
श्रीपार्श्वोपासकीभूय, श्रीवीरपितरावथ । मृत्वाऽनशनयोगेन, माहेन्द्रं वाऽच्युतं श्रितौ ॥ ५५ ॥
प्रपूर्णाभिग्रहो दक्षप्रतिज्ञो ज्ञातनन्दनः । विनीतो भद्रकोऽष्टाविंशत्यब्दान्यस्थाद् गृहे विभुः ॥ ५६ ॥
पृष्टोऽथ वर्द्धमानेन, व्रतार्थं नन्दिवर्द्धनः । स्पष्टमाचष्ट मा भ्रातः !, क्षेप्सीः क्षारं क्षते क्षतम् ॥ ५७ ॥
ततो वर्षद्वयं तस्थौ, गार्हस्थ्येऽस्योपरोधतः । दाक्षिण्यसेवधिर्वीरः, शुद्धसाधुरिवाधिकम् ॥ ५८ ॥
अथो लोकान्तिका देवा, अभ्येत्येत्याशिषं ददुः । जय नन्द जय भद्र ! भद्रं ते क्षत्रियोत्तम ! ॥ ५९ ॥
बुद्धयस्व भगवन् ! लोकनाथ ! धर्मेऽस्त्वविघ्नता । इति कृत्वा जयशब्दं, प्रयुञ्जन्ति प्रभोः पुरः ॥ ६० ॥ युग्मम् ॥
चारित्रावसरं स्वामी, जानन् ज्ञानेन तु स्वयम् । ताम्रचूडैर्निशाशेषमिव तैर्बोधितः क्षणम् ॥ ६१ ॥
प्रदाय वार्षिकं दानं, मिलितैश्च चतुर्विधैः । सुपर्वराजैस्तैः सर्वैस्तीर्थाम्भोभिः कृताप्लवः ॥ ६२ ॥
सर्वाङ्गाभरणैश्चारु चन्दनैश्चर्चिताङ्गभृत् । कृतषष्ठतपाश्चन्द्रप्रभाख्यां शिबिकां श्रितः ॥ ६३ ॥

मार्गशीर्षासितदशम्यां, प्रथमे वयसि स्थितः । ज्ञातखण्डवने वीर एकाक्येवाददे व्रतम् ॥ ६४ ॥ (त्रिभिः सम्बन्धः)
ज्ञानत्रयधरो धीरो, गृहस्थत्वेऽभवत् पुनः । तुर्यं ज्ञानं तदोत्पेदे, मनःपर्यवसंज्ञकम् ॥ ६५ ॥
तत्रोद्यानेऽखिलान् ज्ञातीन्, पृष्ट्वाऽनस्तमिते रवौ । कुमार(र्मा) ग्राममायातः, सायं तु प्रतिमां स्थितः ॥ ६६ ॥
एकस्तत्रैत्य गोपालोऽवग् वीरं–मद्वृषाविमौ । चिन्त्यौ यावद् विधायैमि, कार्यं गोदोहनादिकम् ॥ ६७ ॥
मौनेन नावगीशोऽपि, स गत्वाऽऽगान्न पश्यति । लग्नो भ्रमितुमप्येतावायातावन्तिकं विभोः ॥ ६८ ॥
दृष्ट्वा रात्रिभ्रमात् क्रुद्धोऽधावतोत्पाटय सेलकम् । स्तेन इत्युपगार्थैमथास्मार्षीद् जिनं हरिः ॥ ६९ ॥
कथमुपात्तचारित्रः, स्वामी विहरति क्षितौ ? । तथाऽऽयान्तं तमालोक्य, द्रागेत्य स्म निषेधति ॥ ७० ॥
ततः कृताञ्जलिः प्राहोपसर्गबहुलो विभो ! । चिरं भावी विहारस्ते, पूर्वकर्मानुभावतः ॥ ७१ ॥
यद्यादिशति मां स्वामी, वारयाम्यन्तिके स्थितः । वीरोऽवादीद् हरे ! नैवं, भूतं भावि भवत्यहो ! ॥ ७२ ॥
यदन्यनिश्रयाऽर्हन्तोऽर्जयन्ति किल केवलम् । किन्तु स्ववीर्यपुरुषाकारादेव हि केवलम् ॥ ७३ ॥
सिद्धार्थव्यन्तरं स्वामिसम्बन्धिनमथो हरिः । आदिश्याददृश्यतां प्राप्तो, विद्युदुद्योतवत् क्षणात् ॥ ७४ ॥
पारणाय प्रगे प्राप्तो, बलस्य गृहिणो गृहे । परमान्नेन तेनापि, स भक्त्या प्रतिलाभितः ॥ ७५ ॥
देवोद्घुष्टमहोदानं, नेदुर्दुन्दुभयो दिवि । चेलोत्क्षेपो रत्नवृष्टिः, पञ्च दिव्यानि जज्ञिरे ॥ ७६ ॥
कृत्वाऽऽद्यं पारणं पात्रे, तत्रेशो देवदूष्यभृत् । तापसाश्रममायातो, मायातोऽत्र पराङ्मुखः ॥ ७७ ॥
तत्र मित्रं कुलपतिः, पितुरास्तेऽर्हतः स तु । उद्बाहुर्मिलनायाऽऽगात्, पूर्वाभ्यासाद् विभुस्तथा ॥ ७८ ॥

ऊचे कुलपतिः स्वामिन् ! प्रासुकोपाश्रयाश्रयात् । अनुग्राह्योऽस्त्वयं वर्षावस्थित्याऽवस्थितात्मना ॥ ७९ ॥
दाक्षिण्येन पुनस्तत्रायातोऽस्थात् प्रतिमास्थिरः । त्रोटयन्त्युटजांस्तार्णान्, तिर्यञ्चः प्रावृडागमे ॥ ८० ॥
निर्दयास्ताडयन्त्यन्ये, नेशस्तान् निर्ममत्वतः । अवोचन्नपरे प्रीत्या, गुरवे सोऽप्यवक् (सोऽवक् च)प्रभुम् ॥ ८१ ॥
देवार्य ! शकुनी नीडं, पीड्यमानं हि रक्षति । त्वत्पिता जगतीपीठं, किं भवान् नैक(व)मास्पदम् ? ॥ ८२ ॥
अप्रीतिकारि दूरेण, स्थानं त्याज्यं तपोधनैः । विजहारेति वर्षासु, न सन्तोऽन्यासुखावहाः ॥ ८३ ॥
व्युत्सृष्टाङ्गेन मौनेन, प्रीतिमद्गृहवासिना । पाणिपात्रेण गृहिणोऽभ्युत्थानाद्यविधायिना ॥ ८४ ॥
भाव्यं मयेत्यसौ पञ्चाग्रहीदुग्रानभिग्रहान् । अथोपसर्गा ग्रन्थेभ्यो, विज्ञेया विबुधैरिह ॥ ८५ ॥
[नोच्यन्ते ग्रन्थबाहुल्यादिति] वीरेण भ्रमताऽऽप्ते(ते)न, यत्तपस्तत्समुत्कटम् । पक्षास्त्रयोदशाब्दानि, द्वादशेत्युच्यतेऽधुना ॥८६॥
षण्मास्येका चतुर्मास्यो, नव द्वे च त्रिमासिके । षट् द्विमास्यश्चैकमासी, द्वादशेति तपोऽभवत् ॥ ८७ ॥
अर्द्ध-द्व्यर्द्ध-सार्द्धद्विमास्यश्च द्वासप्ततिर्द्धे द्वे । भद्राद्याः प्रतिमास्तिस्रो, द्वि-चतुर्दशवासरैः ॥ ८८ ॥
प्रतिमा द्वादशाच्छिन्ना अष्टमेनैकरात्रिकी । साभिग्रहा शराहोनां, षण्मासीं वत्सपत्तने ॥ ८९ ॥
षष्ठानां द्विशतीमेकोनत्रिंशदधिकां व्यधात् । त्रिशत्येकोनपञ्चाशत्, पारणाः सर्वसङ्ख्यया ॥ ९० ॥ युग्मम् ॥
चतुर्थभक्तं नो नित्य-भक्तं कर्हिचिदप्यभूत् । अपानकं तथा सर्वं, तपोऽस्य चरमार्हतः ॥ ९१ ॥
दीक्षाया दिनमेकं च, सर्वं निक्षिप्य मीलितम् । पूर्वोक्तमानश्छद्मस्थ-काल एषोऽस्य शासितुः ॥ ९२ ॥
तुर्येऽह्नः प्रहरे राधविशुद्धदशमीदिने । शुक्लध्यानान्तरे वर्त्तमानस्यानुत्तरं प्रभोः ॥ ९३ ॥

नद्यृजुपलिकातीरे, जृम्भिकयाः पुरो बहिः । अव्यक्ताख्यस्य चैत्यस्यासन्ने श्यामाकगेहिनः ॥ ९४ ॥
क्षेत्रान्तः शालवृक्षाधः, षष्ठेनोत्कटिकासने । स्थितस्य तस्य सम्पन्नं, केवलं जन्मभे शुभे ॥ ९५ ॥ [त्रिभिः सम्बन्धः]
ततश्चतुर्विधैर्देवैर्निर्मिते धर्मसद्मनि । जीतमित्यकरोद् धर्मदेशनां धर्मदेशकः ॥ ९६ ॥
आश्चर्यं तत्र नो कश्चित्, साधुर्वा श्रावकोऽभवत् । ततो विहृत्य शर्वर्यां द्वादश योजनान्यगात् ॥ ९७ ॥
महसेनवने पापापुर्यां धर्मगृहे स्थितः । तत्राऽऽस्ते(स्ति)सोमिलज्योतिर्यागकर्त्ता द्विजस्तदा ॥ ९८ ॥
एकादशाप्युपाध्यायास्तेनाहूताः क्रतूपरि । मिलिताः सन्त्यथायान्ति, नमस्कर्त्तुं जिनं जनाः ॥ ९९ ॥
प्रसस्रुस्तन्मुखे वाचः, सर्वज्ञोऽत्रागतोऽस्ति हि । तच्छ्रुत्वाऽचिन्तयत् चित्ते, गौतमोऽहङ्कृतेरदः ॥ १०० ॥
विद्यमाने न कोऽप्यन्यः, सर्वज्ञो मयि सम्प्रति । एकस्मिन्नुदिते भानौ, किमन्यः कर्हिचिद् भवेत् ॥ १०१ ॥
परं कोऽपि महाधूर्त्त, इन्द्रजालिकविद्यया । विस्मापयति नूनं मुग्धान्, न लोकः पारमार्थिकः ॥ १०२ ॥
अथाकाशे प्रकाशास्यांश्चलत्कु[कु]ण्डलधारिणः । आयातो वीक्ष्य गीर्वाणान्, विमानस्थान् महस्विनः ॥ १०३ ॥
उपाध्यायादयः प्राहुरहो ! माहात्म्यमात्मनः । क्रतोरायान्ति यदमी, महिमां कर्त्तुमुन्मुदः ॥ १०४ ॥( युग्मम् )
श्वपाकपाटकमिव, त्यक्त्वा तं यज्ञपाटकम् । ते समवसृतौ जग्मुर्न सुधीर्मुग्धमार्गगः ॥ १०५ ॥
तद् दृष्ट्वा गौतमोऽवादीत्, मुग्धा जग्धा ह्यनेन चेत् । कथं सुरा ? वा संयोगः सदृशो ग्राम्य-मूर्खयोः ॥ १०६ ॥
यामि पश्यामि सर्वज्ञवादमुत्तारयामि वा । इति ध्यात्वा वृतश्छात्रैस्तत्रागाद् गौतमो रयात् ॥ १०७ ॥
आगच्छ भो गौतमेति, भाषितः स्वामिनाऽऽह सः । कथं मे नाम जानाति ?, को वा वेत्ति न मामिह ? ॥१०८॥

परं ज्ञास्यति सन्देहं, हार्दं मे चेद्यं तदा । सत्य इत्यवदत् तावद् वेदसत्यार्थमीशिता ॥ १०९ ॥
तत उत्खातमिथ्यात्वपटलं शुचिदर्शनः(म्) । स्फुरद्रूपतयाऽद्राक्षीद्, गौतमो:वीर भास्करम् ॥ ११० ॥
मुक्तमानं नमन्मौलिमर्हन्मौलिरमुं तदा । चारित्रं ग्राहयामास, च्छात्रपञ्चशतीवृतम् ॥ १११ ॥
एवमेवाग्निभूत्याद्या, दीक्षिताः स्वामिना तदा (दश) । सर्वे चैकादशाभूवन्, क्रमेण गणधारिणः ॥ ११२ ॥
चतुर्दश सहस्राणि, श्रमणा गुणशालिनः (धारिणः) । षट्त्रिं शच्चसहस्राणि, श्रमण्योऽस्य परिच्छदः ॥ ११३ ॥
लक्षमेकोनषष्टिश्च, सहस्राः श्रावकास्तथा । तेभ्यो द्विगुणमानाश्च, श्राद्धयोऽकंव्रतधारिकाः ॥ ११४ ॥
मनःपर्यविनां वादिनां चतुर्दशपूर्विणाम् । शतानि पञ्च चत्वारि, त्रीण्येवं स्युर्यथाक्रमम् ॥ ११५ ॥
शतं वैक्रियलब्धीनां, सप्त केवलिनामपि । सर्वार्थसिद्धय(द्धा)वधिनां, शतान्यष्टौ(ष्ट) त्रयोदश ॥ ११६ ॥
द्वयोर्द्वयोः किलैकस्या वाचनाया विशेपतः । नव गच्छास्तदीशाश्चैकादशेति यतिक्रमः ॥ ११७ ॥
स्वशासनस्य रक्षार्थं, यक्षं मातङ्गसञ्ज्ञकम् । तथा सिद्धायिकां देवीमादिशदीशिताऽन्तिमः ॥ ११८ ॥
एवं चतुर्विधं सङ्घं, संस्थाप्य जगतां पतिः । सेव्यस्त्रिदशकोटीभिर्विजहार वसुन्धराम् ॥ ११९ ॥
दान-लाभ-वीर्य-भोगोपभोगा अन्तरायकाः । हासो रत्यरती भीतिर्जुगुप्सा शोक-मन्मथौ ॥ १२० ॥
मिथ्यात्वाज्ञानता निद्राऽविरति-द्वेष-रागताः । इत्यष्टादशदोषेण मुक्तो मुक्तिसुखोन्मुखः ॥ १२१ ॥
चतुस्त्रिंशदतिशयैः, प्रातिहार्याष्टकेन च । पञ्चत्रिंशद्वचनातिशयैश्च सहितो बभौ ॥ १२२ ॥
नो भवितव्यतानाशो, गोशालस्त्वा जगत्प्रभुम् । यच्चुक्रोश हहा ! तेऽग्रे, महर्षी दग्धवानपि ॥ १२३ ॥

वसन्ति सन्तो यत्रैकं, मुहूर्त्तं तं कृतार्थताम् । नयन्तीति शिवं देवानन्दर्षभदत्तयोरदात् ॥ १२४ ॥
दिशन् सप्तसभङ्गानिं, नव तत्त्वानि तत्त्ववित् । देशोनत्रिंशद्वर्षाणि, पापायां विहरन्नगात् ॥ १२५ ॥
हस्तिपालनृपालस्य, शुक्लांशौ शुल्कमण्डपे । कार्तिकामावसीरात्रौ, षष्ठेन:स्वातिभे शुभे ॥ १२६ ॥
पर्यङ्कासनमासीनस्तुर्यारान्ते प्रशान्तहृत् । भवोपग्राहिकर्मांशक्षयादुच्छिन्नबन्धनः ॥ १२७ ॥
सार्द्धद्वये वर्षशते, व्यतीते पार्श्वतः प्रभोः । द्वासप्तत्यब्दसर्वायुः, करणे नागनामके(नि) ॥ १२८ ॥
अष्टादशगणोर्वीशपुरस्ताद् धर्मदेशनाम् । षोडश प्रहरान् कुर्वन्नेकाकी शिवमाप सः ॥ १२९ ॥ [चतुर्भिः सम्बन्धः]
जाति–जन्म–जरा–मृत्युमुख्याबाधाऽकलङ्कितः । तत्रानन्तानन्तकालं, स्थाता त्राताऽङ्गिनां विभुः ॥ १३० ॥
इत्यागमारामकृतोञ्छवृत्तिना, मुग्धेन दब्धाऽस्य चरित्रमालिका ।
यः कण्ठपीठे लुठितामशाठ्यतस्तनोत्यनन्तां लभते रमामिमाम् ॥ १३१ ॥

इति श्री मुद्रितऋषिमण्डलवृत्तिपृष्ठाङ्क १८ तः उद्धृतं

## इति श्री महावीरस्वामिचरित्रम् संपूर्णम्

## श्री सनत्कुमार चक्रवर्तिचरित्रम्

तथाहि योगमाहात्म्याद्योगिनां कफविन्दवः । सनत्कुमारादेरिव जायन्ते सर्व्वरुकूछिदः ॥ १ ॥
सनत्कुमारो हि पुरा चतुर्थचक्रवर्त्यभूत् । षट्खण्डपृथिवीभोक्ता नगरे हस्तिनापुरे ॥ २ ॥

कदाचिच्च सुधर्म्मायां सभायां जातविस्मयः । रूपं तस्याप्रतिरूपं वर्णयामास वासवः ॥ ३ ॥
राज्ञः सनत्कुमारस्य, कुरुवंशशिरोमणेः । यद्रूपं न तदन्यत्र, देवेषु मनुजेषु वा ॥ ४ ॥
इति प्रशंसां रूपस्या-श्रद्दधानावुभौ सुरौ । विजयो वैजयन्तश्च, पृथिव्यामवतेरतुः ॥ ५ ॥
ततस्तौ विप्ररूपेण रूपान्वेषणहेतवे । प्रासादद्वारि नृपतेस्तस्थतुर्द्वाःस्थसन्निधौ ॥ ६ ॥
आसीत् सनत्कुमारोऽपि तदा प्रारब्धमज्जनः । मुक्तनिःशेषनेपथ्यः सर्वाङ्गाभ्यङ्गमुद्वहन् ॥ ७ ॥
द्वारस्थौ द्वारपालेन द्विजाती, तौ निवेदितौ । न्यायवर्त्ती, चक्रवर्त्ती, तदानीमप्यवीविशत् ॥ ८ ॥
सनत्कुमारमालोक्य विस्मयस्मेरमानसौ । धूनयामासतुर्मौलिं, चिन्तयामासतुश्च तौ ॥ ९ ॥
ललाटपट्टः पर्यस्ताष्टमीरजनिजानिकः । नेत्रे कर्णान्तविश्रान्ते, जितनीलोत्पलत्विषी ॥ १० ॥
दन्तच्छदौ पराभूतपक्वविम्बीफलच्छवी । निरस्तशुक्तिकौ कर्णौ कण्ठोऽयं पाञ्चजन्यजित् ॥ ११ ॥
करिराजकराकारतिरस्कारकरौ भुजौ । स्वर्णशैलशिलालक्ष्मीविलुण्टाकमुरःस्थलम् ॥ १२ ॥
मध्यभागो मृगारातिकिशोरोदरसोदरः । किमन्यदस्य सर्वाङ्गलक्ष्मीर्वाचां न गोचरः ॥ १३ ॥
अहो कोऽप्यस्य लावण्यसरित्पूरो निरर्गलः । येनाभ्यङ्गं न जानीमो, ज्योत्स्नयोडुप्रभामिव ॥१४॥
यथेन्द्रो वर्णयमास तथेदं भाति नान्यथा । मिथ्या न खलु भाषन्ते महात्मानः कदाचन ॥ १५ ॥
किं निमित्तमिहायातौ, भवन्तौ द्विजसत्तमौ । इत्थं सनत्कुमारेण, पृष्टौ तावेवमूचतुः ॥ १६ ॥
लोकोत्तरचमत्कार-कारकं सचराचरे । भुवने भवतो रूपं, नरशार्दूल गीयते ॥ १७ ॥

दूरतोऽपि तदाकर्ण्य, तरङ्गितकुतूहलौ । विलोकयितुमायातावावामवनिवासव ! ॥ १८ ॥
वर्ण्यमानं यथा लोके, शुश्रुवेऽस्माभिरद्भुतम् । रूपं नृप ततोऽप्येतत्सविशेषं निरीक्ष्यते ॥ १९ ॥
ऊचे सनत्कुमारोऽपि, स्मितविस्फुरिताधरः । इयं हि कियती कान्तिरङ्गेऽभ्यङ्गतरङ्गिते ॥ २० ॥
इतो भूत्वा प्रतीक्षेथां, क्षणमात्रं द्विजोत्तमौ । यावन्निवर्त्यतेऽस्माभि-रेष मज्जनकक्षणः ॥ २१ ॥
विचित्ररचिताकल्पं भूरिभूषणभूषितम् । रूपं पुनर्निरीक्षेथां, सरत्नमिव काञ्चनम् ॥ २२ ॥
ततोऽवनिपतिः स्नात्वा कल्पिताकल्पभूषणः । साडम्बरः सदोऽध्यास्ताम्बररत्नमिवाम्बरम् ॥ २३ ॥
अनुज्ञातौ ततो विप्रौ, पुरोभूय महीपतेः । निदध्यतुश्च तद्रूपं, विषण्णौ दध्यतुश्च तौ ॥ २४ ॥
क्व तद्रूपं क्व सा कान्तिः, क्व तल्लावण्यमप्यगात् । क्षणेनाप्यस्य मर्त्यानां, क्षणिकं सर्वमेव हि ॥ २५ ॥
नृपः प्रोवाच तौ कस्माद्—दृष्ट्वा मां मुदितौ पुरा । कस्मादकस्मादधुना, विषादमलिनाननौ ॥ २६ ॥
ततस्तावूचतुरिदं, सुधामधुरया गिरा । महाभाग ! सुरावावां, सौधर्मस्वर्गवासिनौ ॥ २७ ॥
मध्ये सुरसभं शक्रश्चक्रे त्वद्रूपवर्णनम् । अश्रद्दधानौ तद्द्रष्टुं, मर्त्यमूर्त्यागतावि॒ह ॥ २८ ॥
शक्रेण वर्णितं यादृक्, तादृशं वपुरीक्षितम् । रूपं नृप तवेदानीमन्यादृशमजायत ॥ २९ ॥
अधुना व्याधिभिरयं, कान्तिसर्व्वस्वतस्करैः । देहः समन्तादाक्रान्तो, निःश्वासैरिव दर्पणः ॥ ३० ॥
यथार्थमभिधायेति. द्राक्तिरोहितयोस्तयोः । विच्छायं स्वं नृपोऽपश्यद्धिमग्रस्तमिव द्रुमम् ॥ ३१ ॥
अचिन्तयच्च धिगिदं सदा गदपदं वपुः ! मुधैव मुग्धाः कुर्व्वन्ति, तन्मूर्च्छां तुच्छबुद्धयः ॥ ३२ ॥

शरीरमन्तरुत्पन्नैर्व्याधिभिर्विविधैरिदम् । दीर्य्यते दारुणैर्दारु, दारुकीटगणैरिव ॥ ३३ ॥
बहिः कथञ्चिद्यद्येतत्प्ररोच्येत तथापि हि । नैयग्रोधं फलमिव, मध्ये कृमिकुलाकुलम् ॥ ३४ ॥
रुजा लुम्पति कायस्य, तत्कालं रूपसम्पदम् । महासरोवरस्येव, वारिशैवालवल्लरी ॥ ३५॥
शरीरं श्लथते नाशा रूपं याति न पापधीः । जरा स्फुरति न ज्ञानं धिग् स्वरूपं शरीरिणाम् ॥ ३६ ॥
रूपं लवणिमा कान्तिः, शरीरं द्रविणान्यपि । संसारे तरलं सर्वं, कुशाग्रजलविन्दुवत् ॥ ३७ ॥
अद्यश्वीनविनाशस्य, शरीरस्य शरीरिणाम् । सकामनिर्ज्जरासारं, तप एव महत्फलम् ॥ ३८ ॥
इति सञ्जातवैराग्यभावनः पृथिवीपतिः । प्रव्रज्यां स्वयमादित्सुः, सुतं राज्ये न्यवीविशत् ॥ ३९ ॥
गत्वोद्याने सविनयं विनयन्धरसूरितः । सर्व्वसावद्यविरतिप्रधानं सोऽग्रहीत्तपः ॥ ४० ॥
महाव्रतधरस्यास्य, दधानस्योत्तरान् गुणान् । ग्रामाद्ग्रामं विहरतः समतैकाग्रचेतसः ॥ ४१ ॥
गाढानुरागबन्धेन, सर्व्वं प्रकृतिमण्डलम् । पृष्ठतोऽगात्करिकुलं, महायूथपतेरिव ॥ ४२ ॥ (युग्मम्)
निष्कषायमुदासीनं, निर्म्ममं निष्परिग्रहम् । तं पर्य्युपास्य षण्मासान्, कथञ्चित्तन्न्यवर्त्तत ॥ ४३ ॥
यथाविध्यात्तभिक्षाभिरकालापथ्यभोजनैः । व्याधयोऽस्य बवृधिरे, सम्पूर्णैर्दोहदैरिव ॥ ४४ ॥
कच्छूशोषज्वरश्वासारुचिकुक्ष्यक्षिवेदनाः । सप्ताधिसेहे पुण्यात्मा सप्तवर्षशतानि सः ॥ ४५ ॥
दुःसहान् सहमानस्य, तस्याशेषपरीहान् । उपायनिरपेक्षस्य, समपद्यन्त लब्धयः ॥ ४६ ॥
अत्रान्तरे सुरपतिः, समुद्दिश्य दिवौकसः । हृदि जातचमत्कार–श्चकारेत्यस्य वर्णनम् ॥ ४७ ॥

चक्रवर्त्तिश्रियं त्यक्त्वा, प्रज्वलत्तृणपूलवत् । अहो सनत्कुमारोऽयं, तप्यते दुस्तपं तपः ॥ ४८ ॥
तपोमहात्म्यलब्धासु, सर्व्वास्वपि हि लब्धिषु । शरीरनिरपेक्षोऽयं, स्वरोगान्न चिकित्सति ॥ ४९॥
अश्रद्दधानौ तद्वाक्यं, वैद्यरूपधरौ सुरौ । विजयो वैजयन्तश्च, तत्समीपमुपेयतुः ॥५० ॥
ऊचतुश्च महाभाग, किं रोगैः परिताम्यसि । वैद्यावावां चिकित्सावो, विश्वं स्वैरेव भेषजैः ॥ ५१ ॥
यदि त्वमनुजानासि, रोगग्रस्तशरीरकः । तदह्नाय निगृह्णीवो रोगानुपचितांस्तव ॥ ५२ ॥
ततः सनत्कुमारोऽपि प्रत्यूचे भोश्चिकित्सकौ । द्विविधा देहिनां रोगा, द्रव्यतो भावतोऽपि च ॥ ५३ ॥
क्रोधमानमायालोभा, भावरोगाः शरीरिणाम् । जन्मान्तरसहस्रानु—गामिनोऽनन्तदुःखदाः ॥ ५४ ॥
तांश्चिकित्सितुमीशौ, चेद्युवां तर्हि चिकित्सतम् । अथो चिकित्सथो द्रव्यरोगांस्तद्व्रत पश्यतम् ॥ ५५ ॥
ततोऽङ्गुलीं गलत्पामां, शीर्णां स्वकफविप्रुषा । लिप्तां शुल्वं रसेनेव, द्राक् सुवर्णीचकार सः ॥ ५६ ॥
ततस्तामङ्गुलीं स्वर्णशलाकामिव भास्वतीम् । आलोक्य पादयोस्तस्य, पेततुः प्रोचतुश्च तौ ॥ ५७ ॥
निरूरूपयिषू रूपं यौ त्वामायातपूर्व्विणौ । तावेव त्रिदशावावां सम्प्रत्यपि समागतौ ॥ ५८ ॥
सिद्धलब्धिरपि व्यधि—बाधां सोढा तपस्यति । सनत्कुमारो भगवानितीन्द्रस्त्वामवर्णयत् ॥ ५९ ॥
आवाभ्यां तदिहागत्य, प्रत्यक्षेण परीक्षितम् । इत्युदित्वा च नत्वा च, त्रिदशौ तौ तिरोहितौ ॥ ६० ॥
एतन्निदर्शनमात्रं, कफलब्धेः प्रदर्शितम् । लब्ध्यन्तरकथा नोक्ता, ग्रन्थगौरवभीरुभिः ॥ ६१ ॥
योगिनां योगमाहात्म्यात्पुरीषमपि कल्पते । रोगिणां रोगनाशाय, कुमुदामोदशालि च ॥ ६२ ॥

मलः किल समाम्नातो द्विविधः सर्व्वदेहिनाम् । कर्णनेत्रादिजन्मैको द्वितीयस्तु वपुर्भवः ॥ ६३ ॥
योगिनां योगसम्पत्तिमाहात्म्याद्द्विविधोऽपि सः । कस्तूरिकापरिमलो रोगहा सर्व्वरोगिणाम् ॥ ६४ ॥
योगिनां कायसंस्पर्शः सिञ्चन्निव सुधारसैः । क्षिणोति तत्क्षणं सर्वानामयानामयाविनाम् ॥ ६५ ॥
नखाः केया रदाश्चान्यदपि योगिशरीरगम् । भजते भेषजीभावमिति सर्व्वौषधिः स्मृता ॥ ६६ ॥
तथाहि तीर्थनाथानां योगभृच्चक्रवर्त्तिनाम् । देहास्थिसकलस्तोमः सर्व्वस्वर्गेषु पूज्यते ॥ ६७ ॥

इति श्री मुद्रितउयोगशास्त्रवृत्तितः उद्धृतं

## इति श्रीसनत्कुमारचरित्रम् संपूर्णम्

## ७ श्रीभरतचक्रि चरित्रम्

अत्रैव भरते शक्रा–ज्ञया श्रीदेन निर्मिता । अस्त्ययोध्यापुरी स्वर्ग--प्रतिस्पर्द्धिसमृद्धिका ॥ १ ॥
प्रथमः प्रथितः पृथ्व्यां, पुत्रः श्रीवृषभप्रभोः । सार्वभौमोऽभवत्तत्र, भरतो भरतेश्वरः ॥ २ ॥
चतुर्दशानां रत्नानां, विभुर्नवनिधिप्रभुः । द्वात्रिंशता सहस्रैर्भू--भुजां सेवितपत्कजः ॥ ३ ॥
लक्षैश्चतुरशीत्याऽश्व--रथेभानां समाश्रितः । ग्रामाणां च पदातीनां, कोटिषण्णवतेः पतिः ॥ ४ ॥
लोकैर्द्वात्रिंशत्सहस्र---देशानां धृतशासनः । सत्पत्तनसहस्राणां, द्विश्चतुर्विंशतेर्विभुः ॥ ५ ॥

द्वासप्ततेः श्रेष्ठपुर---सहस्राणामधीश्वरः । सहस्रोनं द्रोणमुख---लक्षं च परिरक्षयन् ॥ ६ ॥
गुह्यकानां षोडशभिः, सहस्रैः सेवितोऽनिशम् । षट्खण्डं भरतक्षेत्र---मखण्डाज्ञः प्रपालयन् ॥ ७ ॥
चतुषष्टिसहस्रान्तः---पुरस्त्रीभिः सहान्वहम् । क्रीडन् पूर्वोक्तपूण्यद्रु---पुष्पाभं सौख्यमाश्रयन् ॥ ८ ॥
ऋषभस्वामिनिर्वाणा---स्पदेऽष्टापदपर्वते । चैत्ये स्वकारिते भक्त्या, जिनबिम्बानि पूजयन् ॥ ९ ॥
साधर्मिकाणां वात्सल्यं, कुर्वन्नाश्रितवत्सलः। पूर्वलक्षाणि षट् क्षोणी---हर्यश्वः सोऽत्यवाहयत् ॥ १० ॥ (अष्टभि कुलकम्)
अन्यदा प्रातरभ्यक्तो---द्वर्त्तितस्नपिताङ्गकः । आदर्शसदनं सोऽगा---त्सर्वालङ्कारभूषितः ॥ ११ ॥
तत्राऽऽत्मदर्शे महति, पश्यंश्चक्री निजं वपुः । भ्रष्टाङ्गुलीयकामेकां, ददर्श स्वकराङ्गुलीम् ॥ १२ ॥
अशोभमानां तां प्रेक्ष्य, प्रेक्षावान् क्ष्माधवाग्रणीः । सकलानप्यलङ्कारा---नेकैकमुदतारयत् ॥ १३ ॥
तत उज्झितपाथोजं, पद्माकरमिवाऽऽत्मनः । विलोक्य वपुरश्रीक---मिति दध्यौ धराधवः ॥ १४ ॥
अहो ! आगन्तुकैरेव---द्रव्यैरङ्गं विराजते । स्वाभाविकं तु सौन्दर्यं, किमप्यस्य न दृश्यते ! ॥ १५ ॥
स्वरूपासारतां वक्ति, यस्य संस्कारसारता । मोहादेव तदप्यङ्गं, जना जानन्ति मञ्जुलम् ! ॥ १६ ॥
मनोज्ञमप्यन्नपान---पुष्पगन्धांशुकादिकम् । विनश्यत्यस्य सङ्गेन, ब्रह्मचर्यमिव स्त्रियाः ॥ १७ ॥
तदहो निर्विवेकत्वं, विदुषामपि बालवत् । ये देहस्येदृशस्यापि, कृते पापानि कुर्वते ॥ १८ ॥
तन्मोक्षदायि मानुष्यं, शरीरार्थेन पाप्मना । द्यूतेनेव द्युसद्रत्नं, युक्तं नाशयितुं न मे ॥ १९ ॥
ध्यायन्नित्यादि सम्प्राप्तः, संवेगमधिकाधिकम् । आरूढः क्षपकश्रेणीं निश्रेणीं, शिवसद्मनः ॥ २० ॥

घनघातिक्षयं कृत्वा भावचारित्रमाश्रितः । अज्ञानतिमिरादित्यं, केवलज्ञानमाप सः ॥ २१ ॥ (युग्मम्)
कृत्वालोचं शक्रदत्तं, मुनिवेशं दधत्ततः । निर्जगाम गृहाच्चक्रि–साधुर्भानुरिवाम्बुदात् ॥ २२ ॥
तमुपात्तव्रतं वीक्ष्य, क्षामसंसारवासनाः ॥ भूपा दश सहस्राणि, दीक्षामाददिरे मुदा ! ॥ २३ ॥
ततः शक्रादयो देवा–स्तं नत्वा स्वाश्रयं ययुः ॥ भुवि व्यहार्षीद्भगवा–नपि भव्यान् प्रबोधयन् ॥ २४ ॥
सप्तसप्ततिलक्षाणि, पूर्वाणां भरतप्रभोः । कौमारे मण्डलित्वे तु, सहस्रं शरदामभूत् ॥ २५ ॥
चक्रित्वेऽष्टसहस्रोनाः, पूर्वलक्षा रसोन्मिताः । पूर्वाणां लक्षमेकं तु, केवलीत्वे व्रतेऽपि च ॥ २६ ॥
सर्वायुषा चतुरशीतिमितानि पूर्व–लक्षाणि सम्यगतिगम्य महेन्द्रनम्यः ॥
कर्मक्षयेण भरतेश्वरसाधुराजो, भेजे महोदयरमामुदितोदितश्रीः ॥ २७ ॥

इति श्री मुद्रित–उत्तराध्ययनाष्टादशमध्ययनवृत्तितः उद्धृतम्

## इति श्रीभरतचक्रिचरित्राम् संपूर्णम्

## ८ श्रीमघवचक्रिचरित्रम्

अभूदिहैव भरते, महीमण्डलसत्पुरे । वासुपूज्यप्रभोस्तीर्थे, नाम्ना नरपतिर्नृपः ॥ १ ॥
स्वप्रजावत् प्रजाः सम्यक्, पालयित्वा चिरं स राट् । संत्यज्य राज्यमन्येद्यु–र्विरक्तो व्रतमाददे ॥ २ ॥

अप्रमत्तश्चिरं दीक्षां, पालयित्वा विपद्य च । अहमिन्द्रः स गिर्वाणो, मध्यग्रैवेयकेऽभवत् ॥ ३ ॥
इतश्चात्रैव भरते, श्रावस्त्यां पुरि भूपतिः । श्रिया समुद्रविजयी, समुद्रविजयोऽभवत् ॥ ४ ॥
तस्या भार्याऽभवद्भद्रा, भद्राकारजितामरी । सोऽथ देवोऽन्यदा च्युत्वा, तस्याः कुक्षाववातरत् ॥ ५ ॥
चतुर्दशमहास्वप्नां–स्तदा च प्रेक्ष्य सा मुदा । राज्ञे जगाद चक्री ते, सुतो भावीति सोऽप्यवक् ॥ ६ ॥
क्रमाच्च सुषुवे पुत्रं, राज्ञी पूर्वेव भास्करम् । महोत्सवैर्नृपस्तस्य, मघवेत्यऽभिधां व्यधात् ॥ ७ ॥
संप्राप्तः सोऽथ तारुण्यं, दत्तराज्यो महीभुजा । उत्पन्नचक्रः षट्खण्डं, साधयामास भारतम् ॥ ८ ॥
भुक्त्वा चिरं चक्रिरमां विरक्तः, प्रान्ते परिव्रज्य स चक्रवर्ती । पंचाब्दलक्षीमतिवाह्य सर्वा–ऽऽयुषो सुरोऽभूत्त्रिदिवे तृतीये ॥९॥

इति श्रीमुद्रितउत्तराध्ययनाष्टादशमध्ययनवृत्तितः उद्धृतं

## इति श्रीमघवचक्रिचरित्रकथा संपूर्णा

## ९ श्री जयचक्रि चरित्रम्

अत्रैव भरते सम्पद्–गृहे राजगृहे पुरे । यशः सुधासमुद्रोऽभू–त्समुद्रविजयो नृपः ॥ १ ॥
पुण्यलावण्यतारुण्या, —शीलालङ्कारशालिनी । वप्रः शालिगुणालीनां, वप्रा तस्य प्रियाऽभवत् ॥ २ ॥
द्विः सप्ततिर्महास्वप्नैः, सूचितोऽभूत्सुतस्तयोः । जयाह्वयो जयन्तस्य, जयन् रूपं वपुःश्रिया ॥ ३ ॥

कलिन्दिकासुधाः पीत्वा, क्रमाद्यौवनमाश्रितः । स द्वादशधनुस्तुङ्गः, पित्र्यां राज्यधुरां दधौ ॥ ४ ॥
जातचक्रादिरत्नश्च, जितषट्खण्डभारतः । बुभुजे रमणीरत्न–मिव चक्रिरमां चिरम् ॥ ५ ॥
स चान्यदा भवोद्विग्नः, संविग्नस्यान्तिके गुरोः । राज्ये निधाय तनयं, सनयं प्राव्रजत्स्वयम् ॥ ६ ॥
सर्वायुषा त्रीनतिगम्य सम्यक्, समासहस्रान् जयचक्रवर्ती ॥
तपोऽनिलैः कर्मघनानपास्य, प्राप्योत्तमं ज्ञानमवाप मुक्तिम् ॥ ७ ॥

इति श्रीमुद्रित–उत्तराध्ययनाष्टादशमध्ययनवृत्तितः उद्धृता

## इति श्री जयचक्रिकथा संपूर्णा

## १० श्रीहरिषेणचक्रिकथा

अत्रैव भरतक्षेत्रे, पुरे काम्पील्यनामनि । महाहरिरभूद्भूमा—न्मेराह्वाना च तत्प्रिया ॥ १ ॥
हरिषेणस्तयोर्विश्वा–नन्दनो नन्दनोऽभवत् । चतुर्दशमहास्वप्न—सूचितोऽस्वप्नजिन्महाः ॥ २ ॥
कलाकलापमापन्नो, वर्द्धमानः शशीव सः । चापपंचदशोत्तुङ्गः, पुण्यं तारुण्यमासदत् ॥ ३ ॥
राज्यं प्राज्यं पितुः प्राप्य, तस्य पालयतः सतः । रत्नान्युत्पेदिरेऽन्येद्यु—श्चक्रादीनि चतुर्दश ॥ ४ ॥
ततः स साधयामास, पट्खंडमपि भारतम् । जातचक्रित्वाभिषेको, भोगांश्च बुभुजे चिरम् ॥ ५ ॥

भववासाद्विरक्तोऽथ, लघुकर्मतयाऽन्यदा । सोऽध्यासीदित्यसौ सम्पत्, प्राक्पुण्यैः सञ्जतास्ति मे ॥ ६ ॥
पुण्यार्जनाय भूयोऽपि, प्रयत्नं विदधे ततः । विनार्जनां हि क्षपिते, मूले स्याद्दुःस्थता भृशम् ! ॥ ७ ॥
ध्यात्वेति तनयं न्यस्य, राज्ये स व्रतमाददे । कर्मकक्षमधाक्षीच्च, सत्तपोजातवेदसा ॥ ८ ॥
समासहस्राणि दशातिबाह्य, सर्वायुषा श्रीहरिषेणचक्री । घातिक्षयाज्ज्ञानमनन्तमाप्य, भेजे महानन्दमनिंद्यकीर्त्तिम् ॥९॥

इति श्री मुद्रित–उत्तराध्ययनाष्टादशमध्ययनवृत्तितः उद्धृता

## इति श्री हरिषेणचक्रिकथा संपूर्णा

## ११ श्री उदयनराजर्षिकथा चरित्रम्

अन्यदोदायननृपः, पौषधौकसि पौषधी । धर्मजागरिकां जाग्र–द्रजन्यामित्यचिन्तयत् ॥ १ ॥
धन्यास्ते नगरग्रामा–करद्रोणमुखादयः । पवित्रयति यान् श्रीमान् वर्द्धमानो जगद्गुरुः ! ॥ २ ॥
श्रुत्वा वीरविभोर्वाणीं, श्राद्धधर्मं श्रयन्ति ये । दीक्षामाददते ये च, धन्यास्तेऽपि नृपादयः ! ॥ ३ ॥
तच्चेत्पुनाति पादाभ्यां, पुरं वीतभयं विभुः । तदा तदन्तिके दीक्षा–मादाय स्यामहं कृती ! ॥ ४ ॥
तच्च तच्चिन्तितं ज्ञात्वा, चम्पातः प्रस्थितः प्रभुः । एत्य वीतभयोद्याने, समवासरदन्यदा ॥ ५ ॥
श्रुत्वाऽथ नाथमायात–मुदायननृपो मुदा । गत्वा नत्वा देशनां च, निशम्येति व्यजिज्ञपत् ॥ ६ ॥

राज्यमङ्गजसात्कृत्वा, व्रतार्थं युष्मदन्तिके। यावदायाम्यहं ताव—त्पावनीयमिदं वनम् ॥ ७ ॥
प्रतिबन्धं मा कृथास्त्व—मित्युक्तः स्वामिना ततः। उदायनो जिनं नत्वा, गृहं गत्वेत्यचिन्तयत् ॥ ८ ॥
सुतायाभीचये राज्यं, यदि दास्यामि साम्प्रतम्। तदाऽसौ मूर्छितस्तत्र, भ्रमिष्यति भवे चिरम्! ॥ ९ ॥
आपातसुन्दरं राज्यं, विपाके चातिदारुणम्। तदिदं न हि पुत्राय, दास्ये विषफलोपमम्! ॥ १० ॥
ध्यात्वेति राज्ये विन्यस्य, जामेयं केशिनं नृपः। जिनोपान्ते प्रवव्राज, केशिराजकृतोत्सवः ॥ ११ ॥
तपोभिरुपवासाद्यै—र्मासान्तैरतिदुष्करैः। शोषयन्कर्म कायं च, राजर्षिर्विजहार सः ॥ १२ ॥
अन्यदा तद्वपुष्यन्त—प्रान्ताहारैरभूद्रुजा। भिषजो भेषजं तस्या, रुजोऽभिदधिरे दधि ॥ १३ ॥
उदायनमुनिप्रष्ठो, गोष्ठेषु व्यहरत्ततः। दधिभिक्षा हि निर्दोषा, तेष्वेव सुलभा भवेत् ॥ १४ ॥
पुरे वीतभयेऽन्येद्यु—रुदायनमुनिर्ययौ। केशिभूपस्तदामात्यै—रित्यूचेऽहेतुवैरिभिः ॥ १५ ॥
परिषहैर्जितो नूनं, मातुलस्तव भूपते!। राज्यलिप्सुरिहायासी—त्ततो मा तस्य विश्वसीः! ॥ १६ ॥
केश्यूचे राज्यनाथोऽसौ, राज्यं गृह्णातु किं मम?। धनेशे गृह्णति द्रव्यं, वणिक्पुत्रस्य किं रुषा? ॥ १७ ॥
अभ्यधुर्धीसखा धर्मः, क्षत्रियाणां न खल्वयम्। प्रसह्य गृह्यते राज्यं, राजन्यैर्जनकादपि! ॥ १८ ॥
प्रतिदद्यौ न तद्राज्यं, प्रत्यदान्न हि कोऽपि तत्। तैरित्युक्तस्ततः केशी, किं कार्यमिति पृष्टवान् ॥ १९ ॥
दुष्टास्ते प्रोचुरेतस्मै, विषं दापय केनचित्। व्युद्ग्राहितस्तैस्तदपि, प्रतिपेदे स मन्दधीः! ॥ २० ॥
ततः कयाचिदाभीर्या, स भूपः सविषं दधि। तस्मै दापितवांस्तस्मा—द्विषं चापाहरत्सुरी ॥ २१ ॥

विषमिश्रदधिप्राप्ति–स्तव तन्मा ग्रहीस्ततः । इत्यूचे च मुनिं देवी, ततः सोऽपि तदत्यजत् ! ॥ २२ ॥
विना दधि व्याधिवृद्धौ, भूयः साधुस्तदाददे । तद्विषं च सुरी प्राग्व—ज्जहार व्याजहार च ॥ २३ ॥
तृतीयवारमप्येवं, देवताऽपाहरद्विषम् । तद्भक्तिरागविवशा—ऽप्रमत्तत्पृष्ठतश्च सा ! ॥ २४ ॥
अन्यदा च प्रमत्तायां, देव्यां सविषमेव सः । बुभुजे दधि भाव्यं हि, भवत्येव यथातथा ! ॥ २५ ॥
ततोऽङ्गव्याकुलतया, ज्ञात्वाऽऽत्मानं विषाशिनम् । चकारानशनं साधुः, समतारससागरः ! ॥ २६ ॥
त्रिंशद्दिनान्यनशनं, पालयित्वा समाहितः । केवलज्ञानमासाद्य, स राजर्षिः शिवं ययौ ॥ २७ ॥

इति श्री मुद्रित–उत्तराध्ययनाष्टादशमध्ययनवृत्तितः उद्धृता

## इति श्री उदयनराजर्षिकथा संपूर्णा

## १२ श्री कपिलकेवलिकथा

तथाहि पुर्यां कौशाम्ब्यां जितशत्रुमहीशितुः । पुरोधाः काश्यपाह्वोऽभू–द्विद्याम्भोनिधिपारगः ॥ १ ॥
यशस्विनीयशा नाम्नी, तस्यासीत्प्राणवल्लभा । अजनिष्ट तयोः सूनुः क्रमेण कपिलाभिधः ॥ २ ॥
कपिले च शिशावेव, विपेदे काश्यपोऽन्यदा । कालः कालमकालं वा, न हि मृत्योरपेक्षते ॥ ३ ॥
मृते तस्मिन्नृपोऽन्यस्मिन्, पुरोहितपदं न्यधात् । अस्तङ्गते रवौ तेजः, प्रदोष इव दीपके ॥ ४ ॥

हयारूढं धृतच्छत्रं तं नूतनपुरोहितम् । गच्छन्तमन्यदापश्य–द्यशा भूरिपरिच्छदम् ॥ ५ ॥
तद्दर्शनानिलोद्भूत–भूरिदुःखानलार्दिता । स्मारं स्मारं निजं कान्तं, रुरोद विवशा यशा ॥ ६ ॥
कपिलोऽपि निजामम्बां, रुदतीं वीक्ष्य दुःखितः । रुदन्नित्यवदन्मात––स्त्वं रोदिषि कुतोऽनिशम् ॥ ७ ॥
साऽवादीदस्य विप्रस्य, या सम्पत् पुत्र ! वर्त्तते । साऽभवत्त्वत्पितुः सर्वा, गता च त्वयि निर्गुणे ॥ ८ ॥
सत्यपि त्वयि पुत्रे यत्, क्रमायाताऽप्यऽगाद्रमा । ततोऽहं दुःखिता कुर्वे, रोदनं नन्दनाऽन्वहम् ॥ ९ ॥
सुतः प्रोचे ब्रूहि मात–र्विद्याभ्यासाय पाठकम् । यथा तदन्तिकेऽधीत्य, भवामि गुणवानहम् ॥ १० ॥
यशाऽशंसन्न कोऽप्यत्र, भवन्तं पाठयिष्यति । यो हि त्वां पाठयेत्तस्मै, कुप्येन्नव्यपुरोहितः ॥ ११ ॥
तद्वत्स ! गच्छ श्रावस्तीं, तत्रास्ति त्वत्पितुः सुहृत् । इन्द्रदत्तद्विजः प्राज्ञः, स हि त्वां पाठयिष्यति ॥ १२ ॥
ततः स गत्वा श्रावस्ती–मिन्द्रदत्तं प्रणम्य च । आत्मानं ज्ञापयित्वोचे, तताऽध्यापय मामिति ॥ १३ ॥
उपाध्यायोऽभ्यधाद्वत्स !, युक्तस्तेऽसौ मनोरथः । विशेषं नह्यहं कश्चित्, पश्यामि पशुमूढयोः ॥ १४ ॥
किन्तु ते भोजनं दातुं, निःस्वत्वादक्षमोऽस्म्यहम् । तद्विना च कथं नित्य–मखिन्नस्त्वं पठिष्यति ? ॥ १५ ॥
भ्रातुष्पुत्राय ते विद्या–र्थिने प्राघुर्णकाय च । भोज्यदानेऽप्यशक्तोऽस्मि, तन्मे दुःखायते भृशम् ! ॥ १६ ॥
अलपत्कपिलस्तात !, कृतं चिन्तनयाऽनया । भिक्षावृत्त्या करिष्येऽहं, प्रत्यहं प्राणधारणम् ॥ १७ ॥
उवाच पाठको भिक्षा–वृत्त्याऽध्येतुं न शक्ष्यते । तदेहि तव भुक्त्यर्थं, प्राथये कञ्चिदीश्वरम् ॥ १८ ॥
इत्युक्त्वा स समं तेन, शालिभद्रेभ्यमन्दिरम् । जगाम कुञ्जर इव, कलभेन समं सरः ॥ १९ ॥

ॐभूर्भुवःस्वरित्यादि--गायत्रीमंत्रवादिनम् । दत्ताशिषं तमिभ्योऽपि, किंकार्यमिति पृष्टवान् ॥ २० ॥
ऊचे द्विजोऽमुं मन्मित्र--पुत्रमध्येतुमागतम् । भोजय प्रत्यहं ज्ञानो--पष्टम्भो हि महाफलः ॥ २१ ॥
सहर्षं शालिभद्रेण, तद्वाक्ये स्वीकृतेऽन्वहम् । पपाठ पाठकोपान्ते, भुक्त्वा तद्वाश्मि माणवः ॥ २२ ॥
भोक्तुञ्चतस्य तद्गेहे, कपिलस्यानुवासरम् । दास्येका तरुणी भोज्यं, शोभनं पर्यवेपयत् ॥ २३ ॥
तस्य विद्याभिरात्मानं, भोज्यैरङ्गञ्च पुष्णतः । उदभूद्यौवनं दास्या--ङ्कुरोज्जीवनजीवनम् ॥ २४ ॥
हास्यशीलो द्विजः सोऽथ, तस्यां दास्यामरज्यत । यौवनं हि विकाराणां, सर्वेषामादिकारणम् ॥ २५ ॥
तया च रक्तया सार्कं, कपिलोऽरमताऽनिशम् । तदेकचित्ता तञ्चैव -मूचे दास्यन्यदा रहः ॥ २६ ॥
त्वमेव मे प्रियः किन्तु, निःस्वोऽसीत्यपरं नरम् । सेवे वस्त्रादिहेतोश्चे--न्न ते कोपः प्रजायते ॥ २७ ॥
अन्वमन्यत निर्मन्यु--स्तत्राथें कपिलोऽपि ताम् । तस्यां पुर्याञ्चान्यदाऽऽसी--द्दासीनामुत्सवो महान् ॥ २८ ॥
तदा च प्रेक्ष्य तां दासी--मुद्विग्नां कपिलो द्विजः । कुतस्तनारतिरिति, पप्रच्छ स्नेहमोहितः ॥ २९ ॥
साऽवादीदद्य दासीना- मुत्सवः समुपस्थितः । न च मे पत्रपुष्पादे--र्मूल्यं किञ्चन विद्यते ! ॥ ३० ॥
तद्विना तु सखीमध्ये, लप्स्येऽहं विगोपनाम् । सश्रियो हि स्त्रियो निःस्वां, हीलयन्ति सखीमपि ॥ ३१ ॥
तच्छ्रुत्वा कपिलोप्यन्त--रधृताऽधृतिमुच्चकैः । याति स्थानान्तरं दुःखं, प्रीत्या वारीव कुल्यया ॥ ३२ ॥
ततस्तमवदद्दासी, सुन्दर ! त्वं विषीद मा। अत्रास्ति श्रेष्ठिषु श्रेष्ठो, धनाढ्यो धनदोपमः ॥ ३३ ॥
यस्तं प्रबोधयेत्सुप्तं, स तस्मै स्वर्णमाषकौ । ददातीति निशाशेषे, याहि त्वं तस्य मन्दिरे ॥ ३४ ॥

कल्पकाले च कल्याणिन्, कान्तैः कल्याणभाषितैः । प्रबोधयेस्तं राजीव–मिवार्कैः कोमलैः करैः ॥ ३५ ॥
इत्युक्त्वा कश्चिदन्यः प्राग्, मा यासीदिति शङ्कया । औत्सुक्याज्ञातकाला सा, निशीथे प्रजिघाय तम् ॥ ३६ ॥
स च राजनरैश्चौर, इति बद्धः पथि व्रजन् । प्रसेनजिन्महीजानेः, पुरः प्रातरनीयत ॥ ३७ ॥
राज्ञा पृष्टश्च वृत्तान्तं, सर्वं सत्यं जगौ निजम् । तच्छ्रुत्वेत्यभ्यधाद्भूपः कृपारसमहोदधिः ॥ ३८ ॥
यन्मार्गयसि तत्तुभ्यं, ददामि वद कामितम् । स्वामिन् विचार्य याचिष्ये, प्रोवाचेति ततो द्विजः ॥ ३९ ॥
सोऽथ राज्ञाभ्यनुज्ञातो, गत्वाऽशोकवनान्तरे । दध्यौ वस्त्रादिकं भावि, न हि माषद्वयेन मे ॥ ४० ॥
तत्सुवर्णशतं याचे, यद्वा तेनापि नो भवेत् । गृहयानादि तन्निष्क–सहस्रं प्रार्थये नृपात् ! ॥ ४१ ॥
यद्वा तेनापि नापत्य–विवाहादि भविष्यति । तल्लक्षं प्रार्थये दातुः, सत्त्वे किं स्तोकयाञ्चया ॥ ४२ ॥
उद्धारो बन्धुदीनादे–र्लक्षेणापि न सम्भवी । सम्पदां च फलं बन्धु–दीनादीनामुपक्रिया ॥ ४३ ॥
कोटिं कोटिशतं कोटि–सहस्रं वा तदर्थये । तस्येति ध्यायतः पुण्य–वशादियमभून्मतिः ॥ ४४ ॥
माषद्वितयमूलस्याप्य–हो लोभमहीरुहः । विस्फूर्जितं यत्कोटीनां, लाभेऽप्युच्चैः प्रवर्धते ! ॥ ४५ ॥
लोभः स्वल्पोऽपि लाभेना–ऽम्भोजनालमिवाम्भसा । वृद्धिं यातीत्यलं तेन, सन्तोषसुखदस्युना ॥ ४६ ॥
विदेशं मातृनिर्देशा–द्विद्यार्थमहमागतः । सापि नोपार्जिता किन्तु, व्यसनं महदर्जितम् ! ॥ ४७ ॥
मातुर्गुरोश्च वाक्यानि, कुलाचारं च लुम्पता । मया विषयगृद्धेन, कर्मानर्हमिदं कृतम् ! ॥ ४८ ॥
विषवद्विषमोदकै–र्विषयैस्तदलं मम । ध्यायन्नित्यादिसंवेगा–ज्जातिस्मृतिमवाप सः ॥ ४९ ॥

कथा-
वः
६॥

स्वयंबुद्धः स्वयं कृत्वा, लोचं मूर्धनि शुद्धधीः। देवतादत्तलिङ्गो द्राग्, राज्ञोऽभ्यर्णे जगाम सः॥ ५०॥
विमृष्टं किमिति स्पष्टं, पृष्टो राज्ञा विशिष्टधीः। निजां मनोरथश्रेणीं, निवेद्येत्यवदन्मुनिः॥ ५१॥
यथा लाभस्तथा लोभो, लाभाल्लोभः प्रवर्धते। माषद्वयाश्रितं कार्यं, कोट्यापि न हि निष्ठितम्!॥५२॥
तन्निशम्य नृपस्तुष्टो-ऽवादीन्मुञ्च व्रतम् द्रुतम्। ददामि कोटीमपि ते, भुंक्ष्व भोगान् यथासुखम्॥ ५३॥
मुनिः स्माह कृतं द्रव्यै-रसारैर्निस्पृहस्य मे। जातो निर्ग्रन्थ एवाहं, धर्मलाभोऽस्तु भूपते!॥ ५४॥
इत्युक्त्वा भूभुजोऽभ्यर्णा-न्निर्गत्योग्रं तपश्चरन्। विचरन् भुवि षण्मास्या, केवलज्ञानमाप सः॥ ५५॥
इतश्च योजनान्यष्टा---दश सर्वत्र विस्तृता। अटव्येकाऽभवद्राज--गृहाभिधपुराध्वनि॥ ५६॥
तत्र चेत्कटदासाख्या--श्चौराः पञ्चशतीमिताः। बलभद्रादयोऽभूवन्, पाताले पन्नगा इव॥ ५७॥
विज्ञाय प्रतिबोधार्हा--स्तांश्च विज्ञानचक्षुषा। तेषामुपकृतिं कर्तुं, तत्रारण्ये ययौ यतिः॥ ५८॥
तमायान्तं द्रुगारूढो--ऽपश्यदेको मलिम्लुचः। आयाति श्रमणः कोपी--त्यन्येषाञ्च न्यवेदयत्॥ ५९॥
अस्मानवगणय्यैव, समेत्ययमिति क्रुधा। गृहीत्वा ते मुनिं निन्यु--रुपसेनापतिं द्रुतम्॥ ६०॥
ऊचे सेनापतिः क्रीडां, कुर्मोऽनेनेति चिन्तयन्। साधो! त्वं नृत्य नृत्येति, ततो यतिरदोऽवदत्॥ ६१॥
वाद्यं नृत्यस्य हेतुस्त--द्वादकश्च न विद्यते। तन्नृत्यं स्यात्कथं? कार्यं, न हि स्यात् कारणं विना॥ ६२॥
वादितेष्वथ तालेषु, चौराणां पञ्चभिः शतैः। ध्रुवकानुच्चकैर्गाय--न्ननर्त कपिलो मुनिः॥ ६३॥

तद्यथा-"अध्रुवे असाययंमि संसारंमि उ दुक्खपउराए ।
किं नाम होज्ज तं कम्मयं, जेणाहं दुग्गइं न गच्छेज्जा ॥ ६४ ॥
प्रतिध्रुवमिमं गायन्, ध्रुवं कपिलकेवली । जगौ स्तूरीन् ध्रुवान् शान्त-रसपीयूषसागरान् ॥ ६५ ॥
एतदध्ययनं जज्ञे, तैरेव ध्रुवकैर्ध्रुवम् । शाश्वत्वं प्रतिपद्यन्ते, वचांस्यपि हि तादृशाम् ॥ ६६ ॥
तेषु चाद्यं ध्रुवं श्रुत्वा, केप्यबुध्यन्त दस्यवः । केचित्त्वन्यं केचिदन्य-तरं तदपरे परम् ॥ ६७ ॥
इत्थं मुनीन्द्रः प्रतिबोध्य तूर्ण-मदीक्षयत्पञ्चशतानि चौरान् । विहृत्य पृथ्व्यां सुचिरं क्रमाच्च, बभूव निर्वाणपुराधिवासी ॥ ६८ ॥

इति श्री मुद्रितउत्तराध्ययनसप्तमाध्ययनवृत्तितः उद्धृता

## श्री कपिलकेवलीकथा संपूर्णा.

## १३ श्री हालिककथा

भो भव्या ! यदि वः शिव जिगमिषा सम्यक्त्वमेकं तदा, त्वस्वान्ते ध्रियतां स्थिरं किमपरैर्बाह्यक्रियाडम्बरैः ।
अन्तःसागरकोटिकोटिविहितायुर्वर्जकर्मस्थितौ, यल्लभ्यं प्रतिभूश्च मोक्षविषये तस्मिन् कथं नादरः ? ॥ १ ॥
बलादपि श्राद्धजनस्य दीयते, सद्दर्शनं सर्वसुखैकजन्मभू । व्यदीधपद्वीरजिनस्तदुद्यमं, श्रीगौतमेनापि न किं कृषीवले ? ॥
एकदा श्रीमहावीरः, कल्पद्रुरिव जङ्गमः । कुर्वन् विहारं प्रोवाच, मार्गे श्रीगौतमं प्रति ॥ १ ॥

यः पुरः प्रेक्ष्यते वत्स !, वराकोऽयं कृषीवलः । त्वत्तस्तस्य महांल्लाभो, भावी तद्गच्छ सत्वरम् ॥ २ ॥
तत्तथेति प्रतिपद्य, गौतमस्तत्र जग्मिवान् । आलापितो हली भद्र !, समाधिस्तव वर्तते ॥ ३ ॥
कस्मात्करोषि पापानि, हलं वाहयसि मुधा । वराकौ वृषभावेतौ, दुर्बलौ मा कदर्थय ॥ ४ ॥
कथं पापकुटुम्बार्थ-मात्माऽनर्थे निपात्यते ? । तपस्यापोतमादाय, तदुत्तर भवाम्बुधिम् ॥ ५ ॥
इति तद्वाक्यपीयूषै-र्दवदग्ध इव द्रुमः । सिक्तः समुल्लसत्प्रीति-रभूदिति च तं जगौ ॥ ६ ॥
अहं विप्रो वसाम्यत्रा-ऽऽसन्नग्रामेऽतिनिर्द्धनः । पापश्रेण्य इवाध्यक्षाः, सन्ति मे सप्त कन्यकाः ॥ ७ ॥
वज्राग्निकल्पा पत्नी मे, तया दग्धः करोमि किम् ? । दुष्पूरोदरपूर्त्यर्थं, मूढैः किं न विधीयते ? ॥ ८ ॥
अतः परं त्वमेवासि, भ्राता माता पिताऽथवा । यदादिशसि तत् कुर्वे, करिष्ये नान्यथा वचः ॥ ९ ॥
ततोऽर्पितः साधुवेषः, स्वीचक्रे सोऽपि तं तदा । चचाल तं सहादाय, गौतमोऽभिजिनं मुदा ॥ १० ॥
सोऽवादीद्गम्यते कुत्र ?, गुरवो यत्र सन्ति मे । भवतामपि पूज्यानां, ये पूज्यास्ते तु कीदृशाः ? ॥ ११ ॥
तस्याग्रेऽर्हद्गुणाः प्रोक्ता—स्तेन सम्यक्त्वमर्जितम् । विशिष्य तु जिनेन्द्रस्य, समृद्धेरवलोकनात् ॥ १२ ॥
क्रमेण यावदद्राक्षीत्, श्रीवीरं सपरिच्छदम् । तावत्तस्य हृदि द्वेषः, कोऽप्यभूदतिदारुणः ॥ १३ ॥
गौतमः प्राह वन्दस्व, श्रीजिनं सोऽपि तं जगौ । अयं गुरुस्त्वदीयश्चे—त्तदा मे न प्रयोजनम् ॥ १४ ॥
गृहाण वेषं यास्यामि, शिष्यो नास्मि तवाप्यहम् । इत्युक्त्वा त्यक्तवेषोऽसौ, मुष्टिं बध्वा प्रनष्टवान् ॥ १५ ॥
हसन्ति सर्वेऽपीन्द्राद्या—स्तादृक्तच्चेष्टितेक्षणात् । अहो ! उपार्जितः शिष्यो, वरीयानिन्द्रभूतिना ॥ १६ ॥

पप्रच्छ गौतमो वीरं, मनाग् लज्जितमानसः । किमिदं कारितं स्वामिन् !, तत्त्ववार्त्तां निवेदय ॥ १७ ॥
ग्रन्थिभेदः कृतोऽनेन, वत्सार्हद्गुणचिन्तनैः । लाभस्तवाभूदस्यैष, द्वेषो यन्मयि तत् शृणु ॥ १८ ॥
पुरा पोतनकग्रामे, प्रजापतिनृपाङ्गजः । अभूवं वासुदेवोऽहं, त्रिपृष्ठ इति विश्रुतः ॥ १९ ॥
अश्वग्रीवो महाराज—स्तदा प्रत्यर्द्धचक्रथभूत् । त्रिपृष्ठहस्तात्तन्मृत्युं, निमित्तज्ञोऽन्यदाब्रवीत् ॥ २० ॥
त्रिपृष्ठस्योपरि तदा, द्वेषमेष भृशं वहन् । चक्रे तन्मारणोपायान्, विफलास्ते तु जज्ञिरे ॥ २१ ॥
शालिक्षेत्रेऽन्यदा तस्य, सिंहः कोऽपि बलोत्कटः । करोत्युपद्रवं हन्तुं, न केनापि स पार्यते ॥ २२ ॥
तद्वारकेण रक्षन्ति, नृपा मुख्यनृपाज्ञया । प्रजापतिक्षितिपते—रन्येद्युर्वारकोऽभवत् ॥ २३ ॥
निषिध्य पितरं तत्र, त्रिपृष्ठो रक्षितुं ययौ । वेगवत्तरमारुह्य, रथं सारथिसंयुतः ॥ २४ ॥
तेनालापितमात्रोऽसौ, सिंहस्तं प्रत्यधावत । क्षमन्ते पौरुषोपेता, रेकारं किमु भूस्पृशाम् ? ॥ २५ ॥
शुक्तिसंपुटवद्द्वेधा, कृत्वा तस्योष्ठयामलम् । विदार्यार्द्धमृतं चक्रे, सिंहं स प्रौढविक्रमः ॥ २६ ॥
कृतो जयजयाराव, आसन्नव्यन्तरामरैः । निनिन्द स्वं पुनः सिंहो, नृमात्रेण हतो हहा ! ॥ २७ ॥
तदा मधुरया वाचा, सारथिस्तमसान्त्वयत् । भविता वासुदेवोऽयं, रङ्कमात्रमिदं नहि ॥ २८ ॥
पुरुषेन्द्रस्य हस्तेन, चेन्मृतः किं विषीदसि ? । मर्त्यलोके ह्ययं सिंह—स्तिर्यग्योनौ पुनर्भवान् ॥ २९ ॥
इति हृष्टस्तया वाचा, मृतः सिंहः समाधिना । भ्रामं भ्रामं भवाम्भोधौ, ते त्रयोऽप्यभवत्क्रमात् ॥ ३० ॥
त्रिपृष्ठजीवो यः सोऽहं, सिंहजीवः कृषीवलः । भवांश्च सारथेर्जीवः, तदिदं भवनाटकम् ॥ ३१ ॥

त्वया मधुरया वाचा, यदसौ प्रीणितः पुरा । मया हतो वराकस्तु, स्नेहवैरे ततस्त्वमू ॥ ३२ ॥
यास्यत्येप हली तु पुद्गलपरावर्त्तार्द्धमध्ये शिवं, त्वत्तो दर्शनमाप्तवान् द्विघटिकं तेनोद्यमः कारितः ।
श्रुत्वेन्द्रप्रमुखा इति व्यतिकरं जाता दृढा दर्शने, तस्मो भव्यजना ! भवद्भिरपि तच्चित्ते चिरं स्थाप्यताम् ॥३३॥

इति श्री मुद्रित–उपदेशसप्ततिकाया वृत्तितः उद्धृता

## श्रीहालिककथा संपूर्णा

## १४ श्री नन्दिमणीकार कथा

भवन्ति पुंसां जिनपादवन्दना–ऽभिसन्धिमात्रादपि सौख्यसम्पदः ।
विवन्दिपुर्वीरजिनं स दर्दुरो–ऽप्यभून्महर्द्धिस्त्रिदशो यथा दिवि ॥ १ ॥

पुरे राजगृहे नन्दि–मणिकारः समृद्धियुक् । श्रीवीराद्धर्ममासाद्य, तमेवं कुरुतेऽन्वहम् ॥ १ ॥
सामायिकप्रतिक्रान्ति–पौषधप्रमुखाः क्रियाः । मुमुक्षुरिव कुर्वाणः, समयं गमयत्यसौ ॥ २ ॥
गृहीतपौपधो ग्रीष्मे–ऽन्यदा रात्रौ तृषार्दितः । उपवासत्रयप्रान्ते, स इत्थं हृद्यचिन्तयत् ॥ ३ ॥
वापीकूपादिकान् वारि–पूरितान् कारयन्ति ये । तेपामेव प्रशस्या श्रीः, सर्वजन्तूपकारिणी ॥ ४ ॥
पौपधं पारयित्वाथ, प्रातर्निर्मितपारणः । कारयामासिवानेष, वापीमनुपमाकृतिम् ॥ ५ ॥

सत्रागारमठान् देव—कुलानि विपिनानि च । तस्यां द्रव्यव्ययेनापि, सर्वतो निरमापयत् ॥ ६ ॥
तत्रासक्तमना धर्म्मे, सञ्जातशिथिलादरः । प्रान्ते तु षोडशासाध्य–व्याधिपीडाविसंस्थुलः ॥७॥ षोडश रोगाश्चैवमुक्ताः—
कासे १ सासे २ जरे ३ दाहे ४ कुच्छिसूले ५ भगंदरे ६ अरसा ७ अजीरए ८ दिट्ठी ९ पुट्ठिसूले १० अरोअए ११ ॥१॥
कंडू १२ जलोअरे १३ सिस १४ कन्नवेअण १५ कुट्ठए १६ । सोल एए महारोगा, आगमंमि विआहिआ ॥ २ ॥
वापीविमोहितस्वान्तो, मृत्वा तस्यामभूदयम् । दर्दुरः कर्म्मभिः को न, विडम्ब्येत सुधीरपि ? ॥ ८ ॥
वापीं दृष्ट्वान्यदा जाति–स्मृतिं प्राप स दर्दुरः । अवज्ञातस्य धर्म्मस्य, ही ममाभूदिदं फलम् ॥ ९ ॥
ततो विरक्तः षष्ठादि, कुर्वन् पारणके पुनः । वाप्यागत्ति जनस्नानात्, प्रासुकं मृत्तिकोदकम् ॥ १० ॥
अन्यदोद्यानमायातं, तत्र वीरजिनेश्वरम् । लोकोक्त्या दर्दुरः श्रुत्वा, वन्दितुं निर्ययौ ततः ॥ ११ ॥
अथ श्रेणिकभूपालः, श्रीवीरं नन्तुमुत्सुकः । चलन्परिवृतः सैन्यै–र्नगरान्निरगाद्बहिः ॥ १२ ॥
दर्दुरोऽपि चलन्मार्गे, नृपाश्वखुरमर्दितः । मृत्वा सौधर्म्मकल्पेऽभू—द्दर्दुराङ्काभिधः सुरः ॥ १३ ॥
सामानिकानां चत्वारः, सहस्रास्तस्य जज्ञिरे । सर्वं तदनुमानेन, ज्ञातव्यं सम्पदादिकम् ॥ १४ ॥
तत्राप्यवधिना ज्ञात्वा, वीरं वन्दितुमागतः । अतुच्छच्छविसम्भार—च्छादितापरदीधितिः ॥ १५ ॥
स्वस्वस्थाननिविष्टेषु, शक्रक्ष्मापादिषु प्रभुः । गिरा योजनगामिन्या, प्रारेभे धर्म्मदेशनाम् ॥ १६ ॥
स्थित्वा जिनान्तिकेऽन्येषां, कुष्ठिरूपं च दर्शयन् । व्यलिम्पत वपुर्जैनं, स दिव्यैश्चान्दनैः रसैः ॥ १७ ॥
श्रेणिकाद्यास्तु जानन्ति, कुष्ठी कोऽप्येष दुष्टधीः । आः ! करोति स्वदेहोत्थ–रसिकाभिर्विलेपनम् ॥ १८ ॥

इतो नद्विर्गतः पापी, श्रीजिनाशातनाकरः । मारणीयो मया नून—मिति दध्यौ नृपस्तदा ॥ १९ ॥
इतश्च स जिन १ क्ष्मापा २–ऽभय ३ शौकरिकान् ४ क्षुतम् । कुष्ठ्यूर्ध्विण उद्दिश्य, क्रमाद्वाक्यान्यमून्यवक् ॥२०॥
राजन् म्रियस्व १ जीव त्वं २, चिरं जीव म्रियस्व वा ३ । मा जीव मा म्रियस्वेति, ४, ततो रुष्टो भृशं नृपः ॥२१॥
देशनान्ते क्षणाच्चास्मिन्, विद्युदुद्योतवद्गते । अप्राक्षीद्भूपतिर्वीरं, कोऽयं कुष्ठी ? प्रभो ! वद ॥ २२ ॥
तवाप्याशातनामेवं, यश्चकार दुराशयः । एतावत्समुदायेऽपि, शीर्णक्लेशः स निश्चितम् ॥ २३ ॥
जिनोऽप्युवाच राजेन्द्र !, नाऽयमाशातनाकरः । चान्दनेन रसेनैष, किन्तु चक्रे विलेपनम् ॥ २४ ॥
वाक्यानि यानि सोऽवादी–च्चत्वार्यपि प्रभुः। उवाच श्रेणिकादीनां, तत्रामन्धं च मूलतः ॥ २५ ॥
उक्तं च— केसिं च वरं मरणं, जीवियमन्नेसिमुभयमन्नेसिं । दद्दुरदेविन्छाए, अहियं केसिंचि उभयंपि ॥ १ ॥
इतश्च्युतो विदेहेषु, मोक्षमेव गमिष्यति । श्रुत्वेति विस्मयोत्फुल्ला, लोकाः स्वस्वगृहं ययुः ॥ २६ ॥
जिनेशध्यानमात्रस्य, श्रुत्वेति फलमुत्तमम् । तत्रैव क्रियतां यत्नो, निर्वृतिर्नो भवेद्यथा ॥ २७ ॥

इति श्री मुद्रित–उपदेशसप्ततिकाया वृत्तितः उद्धृता

## श्री नन्दिमणीकारकथा संपूर्णा

## १५ श्री कुमारपालपूजाकथा

अल्पापि पूजा विहिता जिनेशितुः, फलं महर्द्धिं न तनोति देहिनाम् ? ।

कूष्माण्डवल्ली तनुकापि यच्छति, स्फारं फलं स्वाश्रितमानवेषु यत् ॥ १ ॥
गूर्जरत्राभुवि त्राता, कुमारः परमार्हतः । अत्र चौलुक्यभूपालो, दृष्टान्तः परिकीर्त्यते ॥ २ ॥
मालवान्तः क्वचित्पल्लया—मभूज्जैत्र इति श्रुतः । क्षत्रियः परलुण्टाक—चरटैः परिवारितः ॥ १ ॥
मुष्णात्यनेकशः सार्थान्, पुष्णाति व्यसनान्यपि । भद्रप्रकृतिरप्येष. चौरसंसर्गदूषितः ॥ २ ॥
अन्यदा जेसलो नाम, सार्थपः क्वापि पत्तने । गच्छन् कथञ्चिद्विज्ञात—श्चरटैस्तैः सुदुर्म्मदैः ॥ ३ ॥
परःशतवणिक्पुत्रै—र्व्यवसायार्थिभिर्युतः । सहस्रैर्दशभिः प्रौढ—पृष्ठौह्यां च सवस्तुभिः ॥ ४ ॥
जैत्रस्तैश्चरटैः सर्वं, सार्थलोकमलुण्टयत् । सार्थपोऽप्युच्छलन्मन्युः, पुनः स्वं नगरं ययौ ॥ ५ ॥
तत्र विज्ञप्य राजानं, तस्यादाय बलं बहु । जघान पल्लीमागत्य, चरटानुत्कटानपि ॥ ६ ॥
जैत्रस्य तनयं बाल—मपि हत्वातिनिर्दयः । वालयित्वा निजं द्रव्यं, पुनः स्वं नगरं ययौ ॥ ७ ॥
बालहत्याविधायित्वा—त्तत्र राज्ञा स तर्जितः । वैराग्यात्तापसीं दीक्षा—मादाय विदधे तपः ॥ ८ ॥
जैत्रोऽथ जीविताकाङ्क्षी, तदानीं सङ्कटात्ततः । नंष्ट्वा कथञ्चिदप्यागा—दुरङ्गबलपत्तने ॥ ९ ॥
तत्र निःशम्बलत्वेन, दुःखी दारिद्र्यपीडितः । तस्थौ कर्म्मकरत्वेन, ओढरव्यवहारिणः ॥ १० ॥
श्रीयशोभद्रसूरीणा—मुपदेशमनारतम् । श्रावं श्रावमसौ जज्ञे, सधर्म्महृदयो मनाक् ॥ ११ ॥
न हन्मि जन्तूनिर्मन्तू—न्न जल्पाम्यनृतं तथा । इत्याद्यभिग्रहांस्तस्य, पार्श्वे जग्राह स क्रमात् ॥ १२ ॥
अन्यदा वार्षिके पर्व—ण्योढरोऽभ्यर्चितुं जिनम् । जैत्रेण सार्द्धं सद्वस्त्रो, जगाम जिनमन्दिरे ॥ १३ ॥

तत्र पूजापरान्वस्त्रा—भरणाद्यैरलङ्कृतान् । लोकानालोक्य जैत्रोऽपि, मनस्येवमचिन्तयत् ॥ १४ ॥
अहो ! प्राक्पुण्ययोगेन, भवेऽत्र सुभगा अमी । आगाम्यपि भवो ह्येषां, भावी भद्रङ्करः खलु ॥१५॥ माघऽप्येवमुच्यते—
हरत्यघं सम्प्रति हेतुरेष्यतः, शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं, व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ १ ॥
विष्णुं प्रति नारदोक्तिः—जिनेन्द्रमहमप्याशु, पूजयामि ततो ध्रुवम् । यतो जिनेन्द्रपूजैव, प्रतिभूः सर्वसम्पदाम् ॥ २ ॥
विमृश्येति पुरा द्यूत—जितैर्नवकपर्दकैः । आत्मीयैरत्र पुष्पाणि, गृहीत्वाऽर्चितवान् जिनान् ॥ १६ ॥
शुभाभिसन्धिपूतात्मो—पवासं चापि तद्दिने । व्यधाद्गुरुमुखेनैष, भक्तिरङ्गतरङ्गितः ॥ १७ ॥
मृत्वा क्रमात्स सञ्जातो, गूर्जरत्रानरेश्वरः । भूपः कुमारपालाख्यः, श्रावकः परमार्हतः ॥ १८ ॥
ओढरोऽभूदुदयनो, जयसिंहस्तु सार्थपः । हेमसूरिर्यशोभद्रः, एवं ते क्रमशोऽभवन् ॥ १९ ॥
कौङ्कणे च महाराष्ट्रे, कीरे जालन्धरे पुनः । सपादलक्षे मेवाडे, दीपे कासीतटे तथा ॥ २० ॥
कर्णाटे गूर्जरे लाटे, सौराष्ट्रे कच्छसैन्धवे । उच्चायां चैव भम्भेर्यां, मारवे मालवे तथा ॥ २१ ॥
इत्यष्टादशदेशेषु, कलिकालेऽपि कश्मले । प्रावीवृतदमारि यः, पुरा केनाप्यकारिताम् ॥ २२ ॥ यदुक्तम्—
पूर्वं वीरजिनेश्वरेऽपि भगवत्याख्याति धर्म्मं स्वयं, प्रज्ञावत्यभयेऽपि मन्त्रिणि न यां कर्त्तुं क्षमः श्रेणिकः ।
अक्लेशेन कुमारपालनृपतिस्तां जीवरक्षां व्यधा—द्यस्यास्वाद्य वचः सुधां स जयतु श्रीहेमचन्द्रो गुरुः ॥ १ ॥
स्वस्ति श्रीमति पत्तने नृपगुरुं श्रीहेमचन्द्रं मुदा, स्वःशक्रः प्रणिपत्य विज्ञपयति स्वामिंस्त्वया सुकृतम् ।

चन्द्रस्याङ्कमृगे यमस्य महिषे यादस्सु यादःपते— र्विष्णोर्मत्स्यवराहकच्छपकुले देवाभयं तन्वता ॥ २ ॥

यावज्जीवमिति श्रीम-द्धर्म्मैकच्छत्रतां सृजन् । यो भावी गणभृत्प्राच्यः, पद्मनाभजिनेशितुः ॥२३ ॥

इत्यल्पपूजापि जिनेश्वराणां, भवेदमन्दाभ्युदयैकहेतुः । अतः समग्रेऽपि हि धर्म्मकार्ये, सैवानिशं मुख्यतया विधेया ॥ २४॥

इति श्रीमुद्रित-उपदेशसप्ततिकावृत्तितः उद्धृता

## श्री कुमारपालपूजाकथा संपूर्णा

## १६ कलिकुण्डतीर्थउत्पत्ति-कथा

चम्पनगर्या आसन्ने, श्वापदश्रेणिभीषणा । कादम्बरीति विख्याता, विद्यते विकटाटवी ॥ १ ॥

कलिनामा महोत्तुङ्ग-स्तस्यामस्ति शिलोच्चयः । तस्याऽधस्तनभूभागे, कुण्डाख्यं च सरोवरम् ॥ २ ॥

तत्स्थानं तद्द्वयीयोगात्, कलिकुण्डमिति श्रुतम् । तीर्थं तु जातं श्रीपार्श्व-चरणाम्भोजपावनात् ॥ ३ ॥

तथाहि वामनः कोऽपि, पुरा क्वापि पुरेऽभवत् । हस्यते प्रत्यहं चैष, स्थाने स्थाने नृपादिभिः ॥ ४ ॥

तदुद्विग्नो मुमूर्षुः स-न्नाऽऽत्मानं क्वापि पादपे । उल्लम्बयितुमारेभे, स तु मूर्खशिरोमणिः ॥ ५ ॥

सुप्रतिष्ठेन मित्रेण, श्राद्धेनैष निषेधितः । उक्तं च भो महाभाग !, किमेवं म्रियसे मुधा ॥ ६ ॥

सौभाग्यारोग्यरूपादि, यदीच्छसि मनोरमम् । तपःप्रभृतिकं जैनं, धर्म्ममेव तदाचर ॥ ७ ॥

इत्युक्त्वा स गुरोः पार्श्वे, नीतोऽश्रावि च देशनाम् । सम्यक्त्वं ग्राहितः शुद्धं, कृतश्च श्रावकोत्तमः ॥ ८ ॥
ततश्च स चिरं तेपे, तपांसि विविधान्यपि । भूयासमुच्चदेहोऽहं, निदानमिति चातनोत् ॥ ९ ॥
स वामनः क्रमान्मृत्वा, यूथनाथो महाबलः । तस्यामटव्यां सञ्जातो, महीधर इति द्विपः ॥ १० ॥
अन्यदा श्रीपार्श्वनाथः, छद्मस्थो विरहन् भुवि । आयातः पल्वले तत्र, कायोत्सर्गे च तस्थिवान् ॥ ११ ॥
स गजो जलपानार्थं, तदा तत्र समागतः । जगन्नाथमथालोक्य, जातिस्मरणवानभूत् ॥ १२ ॥
अहो ! धर्मं विराध्याऽहं, पशुरज्ञानतोऽभवम् । तदैव देवमर्चित्वा, कुर्वे स्वं सफलं जनुः ॥ १३ ॥
विमृश्येत्यम्बुजव्रातै-रभ्यर्च्य परमेश्वरम् । कृत्वानशनमुत्पन्नो, महर्द्धिर्व्यन्तरेष्वसौ ॥ १४ ॥
श्रुतश्च चम्पानाथेन, करकण्डुमहीभुजा । सर्वो व्यतिकरः सोऽयं, विस्मितश्च स्वचेतसि ॥ १५ ॥
यावत्स भूपतिस्तत्रा-गच्छत्युत्साहपूरितः । विजहार प्रभुस्तावत्, स विषादं दधौ भृशम् ॥ १६ ॥
किं स्यान्निर्भाग्यसत्त्वानां, श्रीजिनेन्द्रस्य दर्शनम् । आत्मानं निन्दयामास, श्लाघयामास च द्विपम् ॥ १७ ॥
स्थाने च तत्र प्रासादं, महान्तं निरपीपदत् । नवहस्तमिताऽस्थापि, तत्र च प्रतिमा प्रभोः ॥ १८ ॥
केचित्पुनरिदं प्राहु-र्धरणेन्द्राऽनुभावतः । नवहस्तप्रमाणार्चा, तदैवाविरभूत्प्रभोः ॥ १९ ॥
वन्दित्वा पूजयित्वा स, प्रतिमां तां प्रमोदवान् । स्वनिर्मापितचैत्ये च, न्यवीविशदयं द्विपः ॥ २० ॥
तत्र स व्यन्तरो लोक-प्रत्ययान् पूरयत्यलम् । ततः प्रभृति सञ्जातं, तत्तीर्थं भुवि विश्रुतम् ॥ २१ ॥
प्रभावनाप्रेक्षणकादिकोत्सवा-नव्याजभक्तिः करकण्डुभूपतिः। निर्मापयंस्तत्र पवित्रचेतसा, प्रभावकश्रावकपुङ्गवोऽभवत् ॥२२॥

स व्यन्तरोऽपि तामर्चां, पूजयन् प्रणमन्स्तुवन् । क्रमात्सुगतिभाग्भावी, तदेवं यजतार्हतः ॥ २३ ॥

इति श्रीमुद्रित–उपदेशसप्ततिकावृत्तितः उद्धृता

## श्री कलिकुण्डतीर्थोत्पत्तिकथा संपूर्णा

## १७ क्रोधोपरि सुरविप्र–कथा

तेष्वप्यसौ क्रोधदवानलोऽङ्गिनां, प्रज्वालयत्यद्‌भुतपुण्यकाननम् ।
आसेवितो यः स्वपरोपतापकृत्, भवेदिहामुत्र च सूरविप्रवत् ॥ १ ॥

श्रीवसन्तपुरे राजा, बभूव कनकप्रभः । सर्व्वाधिकारी सर्व्वेष्टः, सुयशास्तत्पुरोहितः ॥ १ ॥
सूरस्तस्य सुतोत्यन्त—कोपनः कलहप्रियः । योऽग्निवत् प्रज्वलन्नेव, नित्यं तिष्ठति दुष्टधीः ॥ २ ॥
पितरि स्वर्गतेऽन्येद्युः, कोपनत्वेन तत्सुतम् । मुक्त्वा पुरोहितपदे, भूभुजाऽन्यो निवेशितः ॥ ३ ॥
ततः स द्वेषमापन्न—स्तच्छिद्राणि गवेषयन् । नानाव्यापादनोपायां—स्तत्र भूपे व्यचिन्तयत् ॥ ४ ॥
दोहनावसरेऽन्येद्यु—र्लत्तया तं जघान गौः । तेन मर्म्माहता सा तु, वराकी मूर्छिता मृता ॥ ५ ॥
आः ! किमेतत्कृतं पाप ! गौरियं मारिता कुतः । इत्यादि यत्तजल्पन्ती, हतानेन स्वपत्न्यपि ॥ ६ ॥
जाते कलकले तत्र, प्राप्तैर्नृपभटैरयम् । निबध्योपनृपं नीतः, सोऽपि तं वध्यमादिशत् ॥ ७ ॥
नानाविडम्बनापूर्वं, ते नयन्ति पुराद्‌बहिः । तावत्तत्पुण्ययोगेन, तापसः कोऽप्युपाययौ ॥ ८ ॥

स तानुवाच भो भद्राः !, कोऽयं किमिति मार्यते । ऊचुस्तेऽप्येष पुंरूपो, राक्षसः कोऽपि विद्यते ॥ ९ ॥
कृपया मोचितस्तेन, स तेभ्यः  सामयुक्तिभिः । सूरोऽपि तापसीं दीक्षा—मादत्ते स्म तदन्तिके ॥ १० ॥
तप्त्वा तपांसि भूयांसि, तस्यैव नृपतेर्वधे । कृत्वा निदानं स मृतो, जातो वायुकुमारकः ॥ ११ ॥
वसन्तपुरमागत्य, तं भूपप्रमुखं जनम् । रजोभिः स्थगयामास, कटरे ! कोपविप्लवः ॥ १२ ॥
च्युत्वा ततोऽभूच्चण्डालः, प्रथमं नरकं ततः । जगाम कोपकिम्पाक—पादपच्छायमाश्रयन् ॥ १३ ॥
ततो दृग्विषसर्पो—ऽभूद्द्वितीये नरके ततः । ततोऽप्यनन्तसंसारं, भ्रान्तः कोपविडम्बितः ॥ १४ ॥
भूयस्यथ गते काले, श्रीपुरे रत्नभूभृतः । सूरजीवोऽभवद्ग्रामा—ध्यक्षो ब्राह्मणनन्दनः ॥ १५ ॥
तथैव कोपनत्वेन, स नृपेण सहान्यदा । कुर्वाणः कलहं राज—भटैरुल्लम्बितो वने ॥ १६ ॥
चतुर्ज्ञानधरं तत्र, प्राप्तं मुनिवरं तदा । आगतो वन्दितुं राजाऽशृणोत्तद्देशनामिति ॥ १७ ॥
भो भोः ! भीमभवारण्ये, स्थिताः किं ? नश्यत द्रुतम् । यद्बद्धवैरा धावन्ति, वैरिणो वोऽनुगामिनः ॥ १८ ॥
वैरिणः क इति क्ष्माप—पृष्टो ज्ञानी पुनर्जगौ । कषायास्तेष्वपि क्रोधो, धत्ते वैरिषु धुर्यताम् ॥ १९ ॥
योऽयमुल्लम्बितो वृक्षे, पुरस्ताद्वीक्ष्यते नरः । इदं क्रोधफलं विद्धि, सर्वानर्थनिबन्धनम् ॥ २० ॥
सूरजन्मप्रभृतिकं, तच्चरितं तदाऽखिलम् । श्रुत्वा ज्ञानिमुनिप्रोक्तं, प्रतिबुद्धा नृपादयः ॥ २१ ॥
केचित्तस्यान्तिके दीक्षां, श्राद्धधर्म्मं च केचन । स्वीकृत्याभिग्रहादींश्च, स्वस्वकार्याण्यसाधयन् ॥ २२ ॥
सूरजीवोऽपि स क्ष्माप—च्छोटितः शान्ततां भजन् । दीक्षामादाय सञ्जातः, सर्वसौख्यैकभाजनम् ॥ २३ ॥

स्त्रीरूपाऽपि क्षमैवैका, क्रोधयोधं जयत्यमुम् । गुणाः परे तु तं जेतुं, पुंरूपा अपि न क्षमाः ॥ २४ ॥
आक्रुष्टोऽपि हतो वापि, न बालैः कलहायते । मुनिः संसारभीरुत्वा--दन्यथा तत्समो भवेत् ॥ २५ ॥
श्रूयते हि पुरा साधु-मेकमुग्रतपःपरम् । देवता काचिदभ्येत्यो--पास्ते तद्गुणरञ्जितः ॥ २६ ॥
साधो ! सुखेन चारित्रं, तव निर्वहते सदा । वपुरस्ति निराबाधं, नाप्यन्यः कोऽप्युपद्रवः ॥ २७ ॥
देवो नरो वा यः कश्चि-द्विरूपं कुरुते तव । तदा वाच्यं ममेत्यादि--वार्त्तां नित्यं चकार सा ॥ २८ ॥
निःस्पृहो मुनिरप्याह, न मे किञ्चन दुष्करम् । यतः सन्तोषिणः सौख्यं, यत्तच्चक्रभृतोऽपि नो ॥ २९ ॥
पारणाहेऽन्यदा गच्छ-न्नगरान्तः स संयतः । अमङ्गलधियाभ्यासद्विजेनैकेन कुट्टितः ॥ ३० ॥
मुनिरप्युच्छलन्मन्यु-र्मुष्टिभिस्तमताडयत् । मुष्टामुष्टि तयोरेवं, चिरं युद्धमजायत ॥ ३१ ॥
भोजनानन्तरे देवी, पप्रच्छ कुशलादिकम् । रुष्टः सोऽप्याह तत्र त्वं, नागता किं त्वयाऽधुना ? ॥ ३२ ॥
मुने ! तत्राहमायाता, परं त्वं नोपलक्षितः । उभयोर्युद्ध्यमानत्वात्त--दानीं समता ह्यभूत् ॥ ३३ ॥
क्षमातपोभ्यां युक्तत्वात्, क्षमाश्रमण उच्यते । तयोरेकतरस्यापि, नाशे नाम्नो निरर्थता ॥ ३४ ॥
इत्थं तया साधुरयं प्रबोधितो, बभूव चारित्रिजनावतंसकः । तत्क्रोधयोधो विजिगीषुभिर्भवं, जेतव्य एवोच्चपदस्पृहा यदि ॥३५॥

इति श्रीमुद्रित-उपदेशसप्ततिकावृत्तितः उद्धृता

## श्री सुरविप्रकथा संपूर्णा

# १८ मानोपरि उज्झितकुमार–कथा

मानोऽपि मान्योऽस्तु मनस्विनां कथं, विडम्बयन्नष्टविधाभिरङ्गिनः ।
यं प्राप्य स क्ष्मापतिपुत्र उज्झिता- भिधोऽपि जज्ञे निजजीवितोज्झितः ॥ १ ॥

अष्टविधमदफलं चेदम्—रज्जाभोगे तिसिआ, अट्टवसट्टा पडंति तिरिएसु । जाईमएण मत्ता, किमिजाई चेव पावंति ॥ १ ॥
कुलमत्त सीआलत्ते, उट्टाइजोणि जंति रूवमए । बलमत्तावि पयंगा, बुद्धिमए बुक्कडा हुंति ॥ २ ॥
रिद्धिमए साणाई, सोहग्गमएण सप्पकागाई । लाभमएण बइल्ला, हवंति इअ अट्ठमयदुट्ठा ॥ ३ ॥ इति श्रीमहापुरुषचरित्रे ॥

राजा नन्दिपुरे रत्न–सारो नीतिलतावनम् । सिञ्चन्नम्बुदवत्सर्व–तापनिर्वापकोऽभवत् ॥ १ ॥
तस्य प्रेमलता राज्ञी, साक्षात्प्रेमलतेव या । कोऽपि जीवोऽन्यदा तस्याः, गर्भे समुदपद्यत ॥ २ ॥
अशुभा दोहदास्तस्याः, जातस्तदनुभावतः । नृपव्यापादनस्तैन्य–वञ्चनोल्लम्बनादयः ॥ ३ ॥
जातमात्रोऽपि बालोऽसौ, प्रच्छन्नं त्याजितस्तया । बहिर्बलिष्ठायुष्कत्वा–द्बराको न मृतः परम् ॥ ४ ॥
एकेन वणिजा दृष्टो, गृहीतश्च दयालुना । अर्पितो निजभार्यायै, पालयामास सापि तम् ॥ ५ ॥
कृतोज्झिताभिधः पित्रा, लब्ध उज्झित इत्ययम् । मनोरथेन महता, जातः पञ्चपवार्षिकः ॥ ६ ॥
अहमेव पटुः प्राज्ञो, धनवान् बलवानपि । केऽमी वराका मनुजाः, मत्पुरः किङ्करा इव ॥ ७ ॥

इत्यहङ्कारपूरेण, तृणीकृतजगत्त्रयः । दिवसानतिचक्राम, स शैलस्तम्भसन्निभः ॥ ८ ॥
मातृपित्रोर्देवगुर्वो–र्न प्रणाममसौ व्यधात् । नित्यमुत्तान एवास्ते, दुर्विनीतशिरोमणिः ॥ ९ ॥
तमाह जनकोऽन्येद्यु–र्वत्स ! विद्यामठं व्रज । पठ ग्रन्थान्मुञ्च शाठ्यं, विनयं कुरु पाठके ॥ १० ॥
अलं मे गलशोषेण, प्राज्ञः प्रागप्यहं यतः । वराकः स उपाध्यायः, किं मे कर्त्ताऽधिकं वद ॥ ११ ॥
वणिजामयमाचारः, इत्यादि बहुचाटुभिः । प्रेषितो लेखशालायां, मातृकादि पपाठ च ॥ १२ ॥
अपराधे क्वचिच्चैष, कलाचार्येण ताडितः । तावत्तमाह रे भिक्षा–चर ! त्वं मां न वेत्सि किम् ? ॥ १३ ॥
पाठनेन तवानेन, किमित्यादि वदन्नयम् । रोषेण सहसोत्थाय, तं जघान चपेटया ॥ १४ ॥
धृत्वा केशेषु दुष्टात्मा, तमुच्चासनसंस्थितम् । पातयामास भूमौ स, किमकृत्यं न पापिनाम् ॥ १५ ॥
ज्ञाते व्यतिकरे तत्र, स आहूतः क्षमाभुजा । भाषितः किमरे मूर्ख !, पण्डितः कुट्टितस्त्वया ॥ १६ ॥
सभ्रूक्षेपं साभिमानं, भूपं स प्राह दुर्मतिः । स मनाक् शिक्षितो भिक्षा–चरस्तत्किन्तु दूषणम् ॥ १७ ॥
अन्योऽपि यदि कश्चिन्मां, धिक्कर्त्ता तादृशं फलम् । स प्राप्स्यतीति सोल्लण्ठ–मुवाच गतभीतिवत् ॥ १८ ॥
क्रुद्धेन क्ष्माभुजा धृत्वा, गलेऽसौ कर्षितः पुरात् । बालहत्याभिया किन्तु, वराको नहि मारितः ॥ १९ ॥
इह लोकेऽप्यहङ्कार–फलमालोक्यतां बुधाः ! । वियोगः स्वजनैर्भूपा–ऽपमानो वनवासिता ॥ २० ॥
यथा चक्री मनुष्येषु, त्रिदशेषु पुरन्दरः । तथा गुणेषु सर्वेषु, धौरेयो विनयः स्मृतः ॥ २१ ॥
अथोज्झितकुमारोऽपि, पर्यटन्विकटाटवीः । तापसाश्रममायात–स्तपोधनसमाकुलम् ॥ २२ ॥

असौ पर्यस्तिकां बध्वा, तेषामग्रे निविष्टवान् । ननाम न शठस्तैर-प्युक्तं मैवमुपाविश ॥ २३ ॥
ततो रुष्टः परित्यज्य, तदाश्रममविश्रमम् । अरण्यानीं भ्रमन्नेष, सिंहमेकं व्यलोकत ॥ २४ ॥
पुच्छमुच्छाल्य सिंहोऽपि, क्ष्वेडाडम्बरभीषणः । तमभ्यधावत क्रुद्धः, सोऽपि मानी व्यचिन्तयत् ॥ २५ ॥
आः ! क एष पशुः किं वा, नश्यतेऽस्माद्वराकतः । लोका अपि हसिष्यन्ति, मां पशोरपि बिभ्यतम् ॥ २६ ॥
इत्यहङ्कारतस्तस्मा-दनश्यंस्तेन मारितः । शास्त्रेऽपि श्रूयते ह्येवं, मणुआण अहियरो ॥ २७ ॥
स जातो गर्दभस्तस्मात्, करभस्तुरगस्ततः । तत्रैव नगरे भूयः, पुरोहितसुतोऽभवत् ॥ २८ ॥
भूत्वापि सर्वविद्यानां, पारगः स मृतस्ततः । तत्रैव नगरे जातो, डुम्बोऽहङ्कारदोषतः॥ २९ ॥
यथा यथा पुरोधास्तं, पश्यत्यस्य तथा तथा । स्नेहः स्याद् दुस्त्यजे येन, स्नेहवैरे पुरातने ॥ ३० ॥
अन्येद्युस्तत्पुरप्राप्त-केवलज्ञानिनोऽन्तिके । पुरोहितस्तत्स्नेहस्य, हेतुं पप्रच्छ सोऽप्यवक् ॥ ३१ ॥
मूलादारभ्य तद्वृत्त-महङ्कारविपाकजम् । मानेन के न पीडयन्ते, प्राणिनः पण्डिता अपि ॥ ३२ ॥
श्रुत्वा पुरोहितस्तेन, ज्ञानिना गदितं वचः । भवाद्विरक्तः प्रव्रज्य, तदन्ते प्राप निर्वृतिम् ॥ ३३ ॥
उज्झितोऽपि सुगतिं गतवान् श्री-धर्ममार्हतमवाप्य गुरुभ्यः। तेन मानव ! न मानविपक्षो, मान्य एष भवता भवबीजम्॥३४॥

इति श्रीमुद्रित-उपदेशसप्ततिकावृत्तितः उद्धृता

## श्री उज्झितकुमार-कथा संपूर्णा

## १९ मायोपरि पापबुद्धि–कथा

मायापिशाचीविवशा नरा ये, स्वार्थैकनिष्ठाः परवञ्चनानि। सृजन्ति तेऽधोगतयो भवन्ति, निदर्शनं त्वत्र स पापबुद्धिः ॥१॥

पुरे श्रीतिलके द्रव्यो–पार्ज्जनैकपरायणौ। धर्म्मबुद्धिः पापबुद्धि–रभूतां वणिजावुभौ ॥ १ ॥

ऋजुस्वभावस्तत्राद्यः, सर्वेषां हितचिन्तकः। द्वितीयः कपटी मायी, विश्वस्तस्याऽपि वञ्चकः ॥ २ ॥

तयोरप्यभवन्मैत्री, वाणिज्यं तन्वतोर्मिथः। लोको वदत्ययं योगः, काष्टक्रकचसन्निभः ॥ ३ ॥

तथापि धर्म्मबुद्धिस्तं, न त्यजत्युत्तमत्वतः। अशोभाकृदपि त्याज्यः, कलङ्कः शशिना किमु ॥ ४ ॥

अन्यदा व्यवसायार्थं, तौ गतौ क्वापि पत्तने। वणिजां क्षीणवित्तानां, व्यवसायो हि कामधुक् ॥ ५ ॥

पृथक्पृथगुपार्ज्यैतौ, दीनाराणां सहस्रकम्। प्राग्वद्वक्रेतरस्वान्तौ, वलितौ स्वपुरं प्रति ॥ ६ ॥

आसन्ने स्वपुरे प्राप्ते, शठोऽशठमभाषत। एतावदखिलं वित्तं, पुरान्तर्गृह्यते कुतः ॥ ७ ॥

कियन्निधीयतेऽत्रैवा–ऽवसरे लास्यते पुनः। राजदायाददस्युभ्यो, भय वित्तस्य नैकधा ॥ ८ ॥

श्रुत्वेति सरलस्वान्तो, वित्तं पञ्चशतीमितम्। न्यास्थत्तत्रैव तच्चेतः–प्रत्ययाय परोऽपि च ॥ ९ ॥

आगतौ स्वगृहे वर्द्धा–पनकं च तयोरभूत्। कियद्दिनान्तरे वित्तं, तद्भूस्थं पापधीरलात् ॥ १० ॥

अथावसरमासाद्य, पापबुद्धिस्तमब्रवीत्। आगच्छ मित्र ! तद्वित्तं, यथा सम्प्रति गृह्यते ॥ ११ ॥

स्थानद्वयं तदालोक्य, रिक्तं प्राह स पापधीः। आः केनापि हृतं वित्त—मावयोर्जीवितोपमम् ॥ १२ ॥

तं धिगस्तु स पापात्मा, म्रियतां किं करिष्यते । विलापान्कृत्रिमानेवं, स सत्यानिव निर्म्ममे ॥ १३ ॥
अथाऽब्रीवीत्स पापात्मा, धार्म्मिकं धर्म्मबुद्धिकम् । रे धर्म्मधूर्त्त ! रे दुष्ट !, तवैवैतद्विजृम्भितम् ॥ १४ ॥
धर्म्मबुद्धिरपि प्राह, भ्रातः ! किमिदमुच्यते । नेदृशं मादृशं कर्म्म, किन्तु कस्यापि पापिनः ॥ १५ ॥
जातो विवाद उभयो-र्गतौ राजकुले च तौ । पापबुद्धिस्तदा प्राह, चौरोऽयं धर्म्मबुद्धिकः ॥ १६ ॥
प्राहुर्नियोगिनः साक्षी, युवयोः कोऽपि विद्यते । पापबुद्धिरभाषिष्ट, साक्षिणो वननाकिनः ॥ १७ ॥
शुद्धबुद्धिर्धर्म्मबुद्धि--स्तदा चेतस्यचिन्तयत् । अहो ! धृष्टत्वमेतस्य, अहो ! कपटपाटवम् ॥ १८ ॥
मम श्रीधर्म्म एवात्र, सखाऽन्यैः किं सहायकैः । प्रातः परीक्षा कर्त्तव्ये-त्यादि भूपादयोऽब्रुवन् ॥ १९ ॥
पापबुद्धिस्ततः प्राह, रात्रौ स्वजनकं प्रति । प्रारब्धोऽयं मया कूट--कलहो निखिलोऽपि हि ॥ २० ॥
कथं कर्त्तासि तातेने-त्युक्तः स प्राह, दुष्टधीः । त्वं तात ! विपिने गत्वा, प्रविश क्वापि कोटरे ॥ २१ ॥
राजादीनां पृच्छतां च, त्वया वाच्यमिति प्रगे । निष्कलङ्कः पापबुद्धि--र्धर्म्मबुद्धिस्तु तस्करः ॥ २२ ॥
तेनेति शिक्षितस्तात-स्तथैव निखिलं व्यधात् । प्रत्यूषे मिलिते लोके, स ऊचे च तथैव तत् ॥ २३ ॥
इतस्ततो विलोकन्ते, न च पश्यन्ति कञ्चन । लोकाः सर्वेऽपि साश्चर्या-स्तूर्णमुत्कर्णतां दधुः ॥ २४ ॥
सहसोत्पन्नबुद्धिस्तु, धर्म्मबुद्धिस्तदाऽवदत् । राजानं प्रति देवेदं, कोटरं ज्वालयिष्यते ॥ २५ ॥
देवो वा मानवो वापि, यथा प्रत्यक्षतां व्रजेत् । इत्युक्त्वा सहसोत्थाय, यावत्तज्ज्वालयत्यसौ ॥२६॥
तावत्स जनकस्तस्मा--त्कोटरान्निर्गतः क्षणात् । कर्म्मणा प्रेरितो जीवो, जनन्या उदरादिव ॥ २७ ॥

तदानीं तं नृपोऽपृच्छ—दरे ! किमिदमद्भुतम् । सोऽपि वृत्तान्तमाचख्यौ, दुःसुतप्रेरणादिकम् ॥ २८ ॥
तं तत्सुतं च ते लोकाः, धिक्कुर्व्वन्तीति रे ! युवाम् । अकुशाथामिदं किं य--न्मित्रेऽपि द्रोहकारिता ॥ २९ ॥
पापबुद्धिस्ततो राज्ञा, मार्यमाणोऽपि वारितः । लगित्वा पादयोर्धर्म्म--बुद्धिना शुद्धबुद्धिना ॥ ३० ॥
धर्म्मबुद्धेस्तदा श्लाघां, निन्दां पापमतेस्तथा । भूपाद्याश्चक्रिरे माया, कटरेऽत्रैव दुःखदा ॥ ३१ ॥
एवं बभूवाऽशठवक्रभावयुग्, तन्मित्रयुग्मं सुखदुःखभाजनम्। मायां भुजङ्गीमिव दूरतस्ततो--ऽवदातचित्तास्त्यजत द्रुतं जनाः ॥

इति श्रीमुद्रित-उपदेशसप्ततिकावृत्तितः उद्धृता

## श्रीपापबुद्धिकथा संपूर्णा

## २० लोभोपरि श्री सागर-श्रेष्ठि-कथा

यो द्वादशं यावदुपागतो गुण—स्थानं निषेधं स्थिरसंविदः सृजेत् ।
इहाप्यमुत्रापि विडम्बयेन्नरं, स लोभवैरी किल सागरं यथा ॥ १ ॥

सागरः सादरो द्रव्यो-पार्ज्जने धर्म्मवर्जितः। अभूच्छ्रीमन्दिरे श्रेष्ठो, द्रव्यकोटयष्टकप्रभुः ॥ १ ॥
परं कदर्यमूर्द्धन्यो, न भुंक्ते न ददाति च । कपाटपिहितं प्रायो, द्वारं तस्य सदा भवेत् ॥ २ ॥
गृह एव स्थितस्यास्य, दृष्टौ कोऽपि करोति न । भोजनस्नानदानादि, याचकः कोऽपि नैति च ॥ ३ ॥

कमला गृहिणी तस्य, देविलस्तनयस्तयोः । विमला तत्प्रिया सर्वे-ऽप्येते तत्त्वकिताः सदा ॥ ४ ॥
तत्र श्वश्रू वधू द्वे ते, मन्त्रतन्त्रविशारदे । अनेकाभिः कुविद्याभिः, स्वैराचारे बभूवतुः ॥ ५ ॥
योगिन्येकाऽन्यदा तस्य, विजने गृहमागता । श्वश्रूवधूभ्यां सा पृष्टा, सादरं नतिपूर्वकम् ॥ ६ ॥
स्वामिन्यत्र गृहे दत्त-द्वारे त्वं कथमागता । साप्याह मम विद्यास्ति, साधारा व्योमगामिनी ॥ ७ ॥
ताभ्यां तस्याश्च सा विद्या, गृहीता बहुमानतः । एकं च शुषिरं दारु, विद्यते तद्गृहे महत् ॥ ८ ॥
तस्मिन्नारुह्य तद्दत्त-मन्त्रशक्त्या च ते उभे । निशीथसमये यातः, क्रीडार्थं स्वेप्सिते पदे ॥ ९ ॥
एयदा कायचिन्तार्थं, निशीथे पुत्र उत्थितः । सुप्ताशेषजनेऽद्राक्षी-त्कौतुकं रहसि स्थितः ॥ १० ॥
श्वश्रूवध्वौ तदोत्थाय, सौत्सुक्यं निभृतक्रमम् । त्वर्यतां त्वर्यतामेव-मूचतुश्च मिथो मुदा ॥ ११ ॥
सोऽप्यभूद्यावदुत्कर्णः, श्वश्रूतावदुवाच ताम् । अरे काष्ठमिदं शीघ्रं, सज्जीकुरु पुरो भव ॥ १२ ॥
आत्मनामस्ति गन्तव्यं, दूरे तन्माविलम्बय । इत्युक्त्वा ते उभे तत्रा-रूढे तन्मन्त्रपूर्वकम् ॥ १३ ॥
तत उत्पतिते व्योम्नि, व्यन्तर्याविव ते उभे । इत्याश्चर्यं तदालोक्या-ऽचिन्तयद्देवलस्तदा ॥ १४ ॥
अहो ! किमेते शाकिन्यौ, पापिन्यौ पतिवञ्चिके । गते कुत्र कदा पश्चा-देते चात्रागमिष्यतः ॥ १५ ॥
इत्यसौ जाग्रदेवास्थात्, तत्र ते यावदागते । ततः क्षणान्तरे जातः प्रातःकालो विकस्वरः ॥१६ ॥
स तयोस्तादृशं वृत्तं, न कस्यापि न्यवेदयत् । परेषां दूषणानीव, प्रायश्चित्तप्रदो गुरुः ॥ १७ ॥
स कौतुकी द्वितीये तु, दिने जाते तमोभरे । प्रागेव शुषिरे तत्र, प्रौढे काष्ठे प्रविष्टवान् ॥ १८ ॥

तथैवारुह्य ते तत्र, जग्मतुः स्वेप्सितं पदम् । प्रवृत्ते क्रीडितुं मुक्त्वा, तत्काष्ठं कापि भूतले ॥ १९ ॥
अन्या अपि स्त्रियः सन्ति, मिलितास्तत्र भूरिशः । चिरं क्रीडारसस्ताभि-श्चक्रे तत्राऽविशङ्कितम् ॥ २० ॥
तत्कोटराद्विनिर्गत्य, कुमारोऽपि भ्रमन् क्वचित् । स्वर्णेष्टिकाभिराकीर्ण-मिष्टिकापाकमैक्षत ॥ २१ ॥
उत्फुल्लनयनश्चेत-स्यचिन्तयदयं तदा । स्वर्णद्वीपो ह्ययं नूनं, श्रूयते यो जनोक्तिभिः ॥ २२ ॥
यः प्राप्य क्लेशकोटिभि-र्निःस्वैः स्वप्नेऽपि नेक्ष्यते । अयत्नेनापि सम्प्राप्तो, मया भाग्यं महन्मम ॥ २३ ॥
द्वित्राः स इष्टिकाः साराः, सन्तोषी जगृहे ततः । मनस्वी नहि लोभी स्यात्, सति लाभेऽपि भूयसि ॥ २४
तथैव कोटरे तत्र, स संलीनवपुः स्थितः । स्वाङ्गोपाङ्गानि सङ्कोच्य, प्रावृषीव महामुनिः ॥ २५ ॥
क्रीडित्वा सुचिरं ते अ-प्यागते तत्र निर्भये । तथैवोत्पतिते व्योम्नि, क्रमाच्च गृहमागते ॥ २६ ॥
प्रातःकाले कुमारस्त-द्वृत्तज्ञापनपूर्वकम् । स्वपित्रे दर्शयत्स्वर्णं, विस्मितः सोऽपि तं जगौ ॥ २७ ॥
अरे मुर्ख ! त्वया स्तोक-मिदमात्तं कथं हहा ! । यत्नं विनापि हस्ताप्तं, धनं को नाम मुञ्चति ॥ २८ ॥
अद्याहं तत्र यास्यामि, तल्लास्यामि यथेप्सितम् । दारिद्र्यं द्रावयिष्यामि, निश्चिन्ता हि भवादृशाः ॥ २९ ॥
इत्युक्त्वोत्थितवान् श्रेष्ठी, लोभक्षोभवशंवदः । तद्ध्यानलीनस्तदह-न्यभूत्तन्दुलमत्स्यवत् ॥ ३० ॥
निशीथिन्यां तथैवैष, तत्काष्ठान्तः प्रविष्टवान् । प्रस्थितः सह ताभ्यां च, तं प्रदेशमुपागमत् ॥ ३१ ॥
ततो निर्गत्य पुत्रोक्ता-भिज्ञानादि स्मरन् हृदि । इष्टिकापाकमद्राक्षीत्, प्रत्यक्षमिव रैगिरिम् ॥ ३२ ॥
हृष्टस्तद्दर्शनाच्छ्रेष्ठी, ह्यसन्तुष्टः स इष्टिकाः । गृहीत्वा तत्तथा वत्रे, कष्टेनामात्स्वयं यथा ॥ ३३ ॥

तथैव श्वश्रूवध्वौ ते, चलिते स्वपुरीमभि । उदन्वदुपरि प्राप्ते, यावत्तावद्बधूरवक् ॥ ३४ ॥
केनापि हेतुना मातः!, काष्ठमद्य महाभरम् । न चलत्यग्रतः शीघ्रं, श्वश्रूरप्याह तां प्रति ॥ ३५ ॥
अरे ! त्यजैतदत्रैव, यच्चैतत् प्रेक्ष्यते तरत् । गृहाण काष्ठं तद्याचो, यथा शीघ्रं पुरे निजे ॥ ३६ ॥
अथ भीतोऽवदच्छ्रेष्ठी, मा मां क्षिपतमम्बुधौ । उपलक्ष्य तमन्योऽन्यं ते ब्रूतस्त्वं क्व रे इह ? ॥३७ ॥
सुतरां कूपिते तस्मा-द्विगोपनभयादिभे । सकाष्ठं तं परित्यज्य, तत्र ते गृहामागते ॥ ३८ ॥ अन्यत्राप्युक्तम्—
अतिलोभो न कर्त्तव्यो, लोभं नैव परित्यजेत् । अतिलोभाभिभूतात्मा, सागरः सागरेऽपतत् ॥ १ ॥
क्रमेण ज्ञातवृत्तान्तो, भीतस्ताभ्यां सुतोऽपि सः । परिव्रज्यामुपादाय, जातः सुखनिकेतनम् ॥ ३९ ॥
लोभस्याप्येवमाकर्ण्य, विपाकं विबुधा जनाः । सन्तोषामृतपूरेणाऽऽत्मानं सिञ्चत सर्वदा ॥ ४० ॥

इति श्रीमुद्रित--उपदेशसप्ततिकावृत्तितः उद्धृता

## श्री सागरश्रेष्ठिकथा संपूर्णा

## २१ न्यायोपरि श्री यशोवर्मनृपकथा

न्यायो नराणां परमं निधानं, न्यायेन विश्वानि सुखीभवन्ति ।
न्यायोपपन्नं पुरुषं श्रयन्ति, श्रियः श्रयन्त्यः सरितामिवेशम् ॥ १ ॥

श्रीरामनाम स्मरति प्रतिप्रगे, जनः समग्रो न तु रावणाऽभिधाम्।
पूर्वौ ददौ किं जगृहे च किं परः, सन्न्याय एवात्र बिभर्त्ति हेतुताम् ॥ २ ॥

यतः—यान्ति न्यायप्रवृत्तस्य, तिर्यञ्चोऽपि सहायताम्। अपन्थानं तु गच्छन्तं, सोदरोऽपि विमुञ्चति ॥ १ ॥

गया तिदीहा दहवयण, जिहिं सुरसेव करंति। दीहपल्लट्टइं रावणह, पत्थर नीरिं तरन्ति ॥ २ ॥

ये मज्जन्ति निमज्जयन्ति च परास्ते प्रस्तरा दुस्तरे, वार्द्धौ वीर तरन्ति वानरभटान्संतारयन्तेऽपि।
नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः, श्रीमद्दाशरथेः प्रतापमहिमा सोऽयं समुज्जृम्भते ॥ ३ ॥

पतन्त्यो भित्तयो यस्या–ज्ञया तिष्ठन्ति निश्चलाः। वशीभवन्ति भूताद्या, अपि यन्नामकीर्त्तनात् ॥ १ ॥
आस्तां यच्चरितं तस्य, सेवकोऽपि नरेश्वरः। यशोवर्माऽभिधो न्यायी, यथाऽभून्नापरस्तथा ॥ २ ॥
कल्याणकटके राम, इव नितिलताम्बुदः। यशोवर्माऽभिधो भूपो, भुङ्क्ते साम्राज्यमूर्जितम् ॥ ३ ॥
द्विष्टः पुत्रोऽपि तस्याऽऽसीत्, त्याज्यः स्वाङ्गस्थपङ्कवत्। गुणवानस्वकीयोपि, मान्यः पुष्पमिवाऽभवत् ॥ ४ ॥
निजप्रतोलीद्वारे स, न्यायघण्टामवन्धयत्। यस्य यस्य यदा कार्यं, तदा तां स स वादयेत् ॥ ५ ॥
तच्चिन्तां कुरुते भूपः, प्राणैरपि धनैरपि। एवं पालयतो न्यायं, तस्य गच्छन्ति वासराः ॥ ६ ॥
तस्य न्यायपरीक्षार्थं, राज्याऽधिष्ठातृदेवता। विधाय सुरभीरूपं, राजमार्गेऽन्यदा स्थिता ॥ ७ ॥
वत्समेकं च सौन्दर्य–सौकुमार्यमनोहरम्। विकुर्व्य सद्यः सञ्जातं, स्वपार्श्वे सा न्यवीविशत् ॥ ८ ॥
अत्रान्तरे राजसौधा–दारुह्य वरवाहिनीम् । तत्रागच्छन्नभूत्तस्य, राज्ञः पुत्रोऽतिदुर्दमः ॥ ९ ॥

अतिवेगवशाच्चैष, वाहिनीं तामवाहयत् । तस्यैवोपरि वत्सस्य, स वराको मृतः पुनः ॥ १० ॥
धेनुः फोत्कुरुतेऽत्यर्थं, मुञ्चत्यश्रूणि निर्भरम् । लोको हाहारवं चक्रे, प्रेक्ष्य तादृग्दशां तयोः ॥ ११ ॥
केनाप्यालापिता चैषा, भद्रे ! राजकुलं व्रज । न्यायघण्टास्ति या तत्र, शृङ्गाग्र्यां तां च वादय ॥ १२ ॥
यथा तवैतदन्याय—प्रतीकारं नृपः सृजेत् । पञ्चमो लोकपालोऽयं, सर्वसाधारणो यतः ॥ १३ ॥
श्रुत्वेति सा गता तत्र, घण्टां बाढमताडयत् । तस्मिंश्चावसरे भूपो, भोजनायोपविष्टवान् ॥ १४ ॥
घण्टानिनादमाकर्ण्या—ऽकाले भूपः ससम्भ्रमः । इदानीं चालिता केन, घण्टेत्याख्यत्स्वसेवकान् ॥ १५ ॥
विलोक्य तेऽपि तं प्राहु—र्नान्यः कोऽप्यत्र गां विना । अकाले गौः कुतोऽत्रेति, स्वयमेवोत्थितो नृपः ॥ १६ ॥
तत्रागत्य स धेनुं तां, सदुःखं प्राह भूपतिः । भवत्या अपि हा ! पापी, कश्चकार पराभवम् ॥ १७ ॥
पराभूताऽसि येन त्वं, तं दर्शय ममाऽधुना । वराकी सा तु नो वेत्ति, वक्तुं मानवभाषया ॥ १८ ॥
किन्तु सा पुरतो भूय, पृष्ठिलग्नस्य भूपतेः । तं वत्सं दर्शयामास, जिवितव्यमिवात्मनः ॥ १९ ॥
उवाच भूपो हट्टादौ, सन्निविष्टं महाजनम् । क्रूरकर्मेदृशं चक्रे, कः पापीति निवेद्यताम् ॥ २० ॥
तदन्यायविधातारं, सर्वे जानन्ति मानवाः । न कोऽपि भाषते किन्तु, तत्सुताऽनर्थशङ्कया ॥ २१ ॥
अतिप्रश्नेऽपि भूपस्य, यावत्कोऽपि न भाषते । तावत् क्रुद्धो नृपः प्राह, सभ्रूक्षेपमिदं वचः ॥ २२ ॥
आः ! पापिनो भवन्तोऽपि, यदीदृगसमञ्जसम् । दृष्टमप्युच्यते यन्न, धिग्वस्तत्पक्षपातिनः ॥ २३ ॥
तदैव भोक्ष्ये यद्येत—त्पापकारी नराधमः । ममाग्रे प्रकटो भावी—त्यभिग्रहमथाऽग्रहीत् ॥ २४ ॥

तस्य न्यायैकनिष्ठस्य, सन्ध्यावधि निषेदुषः । तद्दिने लङ्घनं जात-महो ! न्यायप्रधानता ॥ २५ ॥
सन्ध्यायां मन्दिरे प्राप्त-स्तनयस्तस्य भूपतेः । प्राह स्वकृतमन्यायं, मम दण्डं कुरु प्रभो ! ॥ २६ ॥
स्वपुत्रकृतमन्यायं, श्रुत्वा दूनो नराधिपः । स्वर्णेनापि हि किं तेन, कर्णच्छेदो भवेद्यतः ॥ २७ ॥
प्रातः पर्षदि भूपेन, पृष्टा नीतिविशारदाः । अस्य पुत्रस्य को दण्डो, विधेय ? इति कथ्यताम् ॥ २८ ॥
उक्तं तैरेक एवायं, राज्यार्हस्तनयस्तव । एकलोचनसङ्काशः, कोऽस्य दण्डो भवेत्प्रभो ! ॥ २९ ॥
न्याय एव प्रधानो मे, दुर्नयेन सुतेन किम् ? । अन्येऽप्येवं वितन्वन्ति, शिक्षा चेन्नाऽस्य दीयते ॥ ३० ॥
ततोऽस्य यो भवेद्दण्ड-स्तं वदन्तु विशारदाः ! । मनागपि न कार्यं मे, दाक्षिण्यमभयं हि वः ॥ ३१ ॥
तैरुक्तं देव । यो यादृक्, कुरुते तस्य तादृशम् । अमनोज्ञं मनोज्ञं वा, क्रियते शास्त्रगीरिति ॥ ३२ ॥
अवाहयद्यथा वत्सो-परिष्टादेष वाहिनीम् । तथाऽस्यापि विधीयेत, दण्डः कोऽप्यस्य नापरः ॥ ३ ॥
आनाय्य वाहिनीं पुत्रं, स्थापयित्वा च वर्त्मनि । जनानुवाच भो एषा, पुत्रस्योपरि वाह्यताम् ॥ ३४ ॥
ईदृग्विधं तदादेशं, यदा कोऽपि करोति न । प्रत्यक्षं सर्वलोकानां, तदा भूप इदं जगौ ॥ ३५ ॥
अयं मदीयो दुष्पुत्रो, जीविताद्वा विनश्यतु । आत्मीयेनापि किं तेन, न्यायो यस्य न वल्लभः ॥ ३६ ॥
इत्युक्त्वा सहसोत्थाय, स्वयमेवोपविश्य च । यावत्तां वाहयत्येष, तस्योपरि दयोज्झितः ॥ ३७ ॥
तावन्न गां न वत्सं च, ददर्श स महीपतिः । सा देवी च पुरोभूय, तस्य श्लाघामिति व्यधात् ॥ ३८ ॥
जय सत्त्ववतां धुर्य !, जय न्यायपरायण ! । श्रीरामस्येव सौभाग्यं, त्वदीयं स्तुवते न के ? ॥ ३९ ॥

कथा-
वः
९॥

चिरायुस्ते सुतो भूयात्साम्राज्यं त्वं च पालय। परीक्षेयं मया चक्रे, इत्युक्त्वा सा तिरोऽभवत् ॥ ४० ॥
एवं न्यायः पालनीयो नृपाधैर्यस्मात्सर्वाः सम्पदो हस्तगाः स्युः।
शस्यानि स्युः किं विना वारिवाहं, प्रावृट्काले प्राच्यमासद्वयोत्थम् ॥ ४१ ॥

इति श्रीमुद्रित-उपदेशसप्ततिकावृत्तितः उद्धृता

## यशोवर्मनृपकथा संपूर्णा.

## २२ धर्मोपरि श्री धर्मराजकथा

श्रीधर्म एव निधिरक्षय एष सौख्य-श्रीणां हितः स्वपरयोश्च भवान्तरेऽपि।
श्रीधर्मराजचरितं विनिशम्य सम्यक्, कस्तत्र वा शिथिलमादरमातनोति ॥ १ ॥

अस्त्यत्र भरतक्षेत्रे, नगरी सर्वमङ्गला। तत्र वित्रासिताराति-र्भूपतिर्भद्रशेखरः ॥ १ ॥
सभामध्यास्त स क्ष्मापः, परिवारयुतोऽन्यदा। तदा नैमित्तिकः कोऽपि, प्राप्तस्तत्र त्रिकालवित् ॥ २ ॥
यथोचितासने राज-दापिते स उपाविशत्। उदस्य हस्तं सर्वेभ्यः, आशीर्वादमुवाच च ॥ ३ ॥
नृपोऽप्राक्षीन्निमित्तज्ञ !, भविष्यद्वद कीदृशम् ?। स्वरूपं भावि सोऽप्याह, माऽधुना पृच्छ्यतां प्रभो !॥ ४ ॥
विशेषतो नृपोऽपृच्छ-दुत्पातः कोऽपि दैवतः ?। किं भावी ? सोऽप्यभाषिष्ट, दुर्भिक्षं द्वादशाब्दिकम् ॥ ५ ॥

अकाण्डाऽशनिसम्पात–सन्निभं तद्वचो नृपः । श्रुत्वा सदुःख इत्याख्यत्, रे ! विमृश्य वचो वद ॥ ६ ॥
समक्षं सर्वसभ्यानां, निमित्तज्ञोऽब्रवीत्पुनः । मद्भाषितं वृथा स्याच्चे–च्छेद्या जिह्वैव मे तदा ॥ ७ ॥
तत्प्रतिज्ञां दृढामेवं, निशम्य क्ष्माभुजाऽपि सः । अस्थापि स्वपुरे क्वापि, गन्तुं नैव ददे तथा ॥ ८ ॥
सर्व्वादरात् सर्व्वलोकै–श्चक्रे धान्यस्य सङ्ग्रहः । स्वकुटुम्बानुमानेन, गत्वा देशान्तरेष्वपि ॥ ९ ॥
स्वस्ववित्तान्यनादृत्य, धान्यान्येव तदा जनैः । मील्यन्ते स्म यतः प्राणाः, नृणामन्नेषु निष्ठिताः ॥ १० ॥
अथोष्णकालेऽतिक्रान्ते, प्रवृत्तेऽपि तपात्यये । उत्पश्ये सर्वलोकेऽपि, वारिदोऽभूदवारिदः ॥ ११ ॥
भृशं विव्यथिरे लोकाः, भाविदुर्भिक्षशङ्कया । धर्म्मकर्म्मव्यवस्था हि, स्यात्सुभिक्षाऽनुयायिनी ॥ १२ ॥
प्राप्ते तु श्रावणे मासे, द्वितीयादिवसेऽसिते । उत्तरस्यामभूदभ्रं, लोकः सम्मुखमैयरुः ॥ १३ ॥
वाद्यानि वादयामासु–र्गीतनृत्यादि तेनिरे । आकृष्ट इव तद्भाग्यै–र्ववर्ष जलदस्तदा ॥ १४ ॥
आख्यद्भूपो निमित्तज्ञं, त्वद्वचोऽद्य वृथाऽभवत् । तत्ते करोमि जिह्वाया–श्छेदं यत्तत्प्रलापिनः ॥ १५ ॥
देव ! किञ्चित्प्रतीक्षस्व, यावन्मिलति कोऽपि मे । ज्ञानी मुनिस्तदग्रे य–द्भवेच्छास्त्रार्थनिर्णयः ॥ १६ ॥
कृषिः कृषीवलैः कर्त्तु—मारेभे मुदिताशयैः । क्षेत्रेषु वीजान्युप्तानि, सुपात्रेष्विव धार्मिकैः ॥ १७ ॥
अन्यवर्षीयनिष्पत्ते—र्निष्पत्तिर्द्विगुणाऽभवत् । तस्मिन्वर्षे नृपोऽप्यासी—त्सपौरो वहुलर्द्धिकः ॥ १८ ॥
निवृत्ते कार्त्तिके मासे, हेमन्तसमयेऽन्यदा । आययुः केचिदाचार्या, केवलज्ञानशालिनः ॥ १९ ॥
सदैवज्ञः सपौरस्ता—न्वन्दितुं नृपतिर्गतः । नैमित्तिकोक्त्यलीकत्व—हेतुं पप्रच्छ तं च सः ॥ २० ॥

अवोचन्सूरयो राजन् !, अत्रैव तव पत्तने । धनदत्त इति श्रेष्ठी, तस्य भार्या धनेश्वरी ॥ २१ ॥
तयोरन्येद्युरुत्पन्नः, सुतः सर्वसुखावहः । यस्य प्रभावतो वृष्टो, मेघो युष्मादृशां मुदे ॥ २२ ॥
अयं हि प्राग्भवे रङ्को, भिक्षावृत्तिरभूत् क्वचित् । दृष्ट्वाऽन्यदा मुनिं कश्चि—द्ववन्दे हर्षपूरितः ॥ २३ ॥
गृहाण नियमान्कांश्चि—दिति तं संयतो जगौ । अन्यथाऽपि तवेदानीं, सम्पत्तिर्नास्ति तादृशी ॥ २४ ॥
ततस्तदन्तिके देवनत्यादीन्नियमानसौ । प्रतिपेदे क्रमाद्भाग्यैः, सोऽपि जातो महर्द्धिकः ॥ २५ ॥
प्राच्यावस्थां निजां तेन, स्मरता हृदि भण्डिताः । सज्जीकृतान्नपानाद्याः, सत्रगेहाः पदे पदे ॥ २६ ॥
रङ्कादारभ्य भूपान्तं, मनुष्यान् लक्षसम्मितान् । तदा सन्तोपयामास, साधूंश्चापि सहस्रशः ॥ २७ ॥
दानपुण्यमखण्डं त—ज्जीवितावधि स व्यधात् । भवेऽत्र तदसौ जातः, आधारः सर्वभूस्पृशाम् ॥ २८ ॥
दुर्भिक्षमभविष्यच्चे—ज्जातो नाऽभूदयं शिशुः । यदैपमोऽन्यदेशेषु, स्तोका एवाभवन् घनाः ॥ २९ ॥
अतो नैमित्तिकः सत्य—स्त्वमेतं माऽवहीलय । श्रुत्वेति विस्मितो राजा, सूरीन्नत्वा गतो गृहम् ॥ ३० ॥
आनाय्य बालकं चक्रे, तमेव नृपतिं नृपः । औचित्याऽऽचरणे सन्तः, किं मुह्यन्ति कदाचन ? ॥ ३१ ॥
यस्याऽऽधारे प्रवर्त्तन्ते, प्रजाः सौख्यसमृद्धिभिः । स एव कीर्त्त्यते राजा, इति स्मृतिवचो यतः ॥ ३२ ॥
धर्म्मराज इति प्रत्त—नामा भूपमुखैर्जनैः । स बालोऽप्यभवद्राजा, बालार्क इव तेजसा ॥ ३३॥
तदाज्ञा यत्र देशेऽभूत् , दुर्भिक्षं तत्र नाऽभवत् । विक्रीयाऽन्येषु, देशे धान्यानि द्युम्नमर्जितम् ॥ ३४ ॥
एवं स धर्म्मप्रवणः प्रभावनां, चक्रे चिरं श्रीजिनराजशासने ।

प्रान्ते परिव्रज्य तपोभिरुत्कटैः, स मोक्षसौख्यं समवाप भूपतिः ॥ ३५ ॥

इतिश्री मुद्रित-उपदेशसप्ततिकावृत्तित उद्धृता

## धर्मराजकथा संपूर्णा

## २३ कठोरवचनोपरि जननी-पुत्र-कथा

विचार्य वाच्यं वचनं हितं मितं, न कर्कशं क्वापि निगद्यते बुधैः ।
अप्येकशः प्रोक्तकठोरवाक्यतो, न किं विगुप्तौ जननीसुतावपि ॥ १ ॥
छिन्नद्मि हस्तौ चरणौ च लोचने, निष्काशयामि त्वमरे ! म्रियस्व वा ।
इत्यादयः कर्कशवाक्परम्परा-स्त्याज्या बुधैर्दुर्गतिमार्ग्गदीपिकाः ॥ २ ॥

ताम्रलिप्तीपुरी ताम्र-मयवप्रविराजिता । तत्रेभ्यो रतिसाराह्वो, बन्धुला तस्य च प्रिया ॥ १ ॥
तयोर्बन्धुमती पुत्री, प्रकृत्योद्भटवेषभाक् । सौवर्णसर्वाभरणा, श्रेष्ठिनोऽत्यन्तवल्लभा ॥ २ ॥
तां प्रत्याह पिता वत्से !, मा कार्षीर्वेषमुद्भटम् । नेदृशो वणिजां भाति, सा तथाऽपि न तिष्ठति ॥ ३ ॥
भृगुकच्छपुरात्तत्र, वाणिज्यार्थमुपेयुषा । बन्धुदत्तेन साऽन्येद्युः, परिणीता सदुत्सवैः ॥ ४ ॥
पुनः प्रभूतलाभार्थी, तां तत्रैव विमुच्य सः । रत्नद्वीपं प्रति प्रास्थात्, पोतमारुह्य वारिधौ ॥ ५ ॥

कियत्यपि व्यतिक्रान्ते, भूभागे तस्य वाहनम् । आहन्यमानं कल्लोलै-र्भङ्गमाप क्षणादपि ॥ ६ ॥
अवाप्य फलकं चैकं, बन्धुदत्तस्तदाम्बुधिम् । लङ्घस्तरीतुं वातेन, प्रेरितश्च तटेऽलगत् ॥ ७ ॥
निभालयति दिक्चक्रं, यावदुद्भ्रान्तलोचनः । तावत्तन्नगरोद्याने, प्राप्तमात्मानमैक्षत ॥ ८ ॥
अहो ! दैवगतिः केयं ?, लज्यते यत्र मानवैः । ईदृक्षोऽहं कथं गन्ता ?, तत्र श्वशुरमन्दिरे ॥ ९ ॥
स्त्रीपीहर नरसासरउ, संजमियां सहवास । एत्रिण्हइ अलखामणां, जइ को करइं तपास ॥ ९ ॥
अतार्कितानि सौख्यानि, दुःखान्यपि शरीरिणाम् । भवति तदलं क्लेश-हेतुना चिन्तयाऽनया ॥ १० ॥
विचिन्त्येति स्थितो देव-कुले ज्ञापितवानसौ । श्वशुरस्य गृहे स्वस्य, तत्र प्राप्त्यादि केनचित् ॥ ११ ॥
श्रुत्वा जामातृवार्त्तां तां, मनःसन्तापकारिणीम् । आः ! किमेतदिति श्रेष्ठी, प्रोच्चरन् सहसोत्थितः ॥ १२ ॥
यावत्तदन्तिके याति, तावदस्तङ्गतो रविः । उत्सूरत्वात्कुटुम्बेन, वारितः स्वगृहे स्थितः ॥ १३ ॥
ब्राह्मये मुहूर्त्ते जामातृ-मिलनाय चचाल सः । आदाय वस्त्राभरण-प्रभृत्यवसरोचितम् ॥ १४ ॥
सौवर्णवलयव्यूहैः, शोभमानभुजालता । स्वपतिं वीक्षितुं बन्धु-मत्यपि प्रस्थिता सह ॥ १५ ॥
श्रेष्ठिनः पृष्ठिगामिन्या-स्तस्याः कोऽपि करौ तदा । चिच्छेद तस्करो लुब्धः, प्राक्कृतं कर्म नान्यथा॥ १६ ॥
सञ्जाते तुमुले तत्र, प्राप्तास्तलवरादयः। ज्ञातस्वरूपास्तच्चौर-पदैरेव दधाविरे ॥ १७ ॥
श्रेष्ठी पश्चाद्गतो गेहे, प्रभूतो मिलितो जनः । उच्चरन्कर्म्म कर्मेति, विदधे शोकसङ्कथाम् ॥ १८ ॥
इतश्च चौरोऽप्यासन्न-प्राप्तांस्तान्वीक्ष्य विह्वलः । तद्देवकुलमायातः, सुप्तः प्रागस्ति यत्र सः ॥ १९ ॥

लोप्त्रं तस्यान्तिके मुक्त्वा, काकनाशं ननाश सः । भटैश्चौरोऽयमेवेति, ज्ञातं तद्वस्तुदर्शनात् ॥ २० ॥
निर्विलम्बं निर्विचारं, शूलायामधिरोपितः । स तैरिति विडम्ब्यन्ते, कर्मभिः के न जन्तवः ? ॥ २१ ॥
अथ श्रेष्ठी सुताशोकं, कृत्वा प्राप्तस्तदन्तिकम् । यावत्तावदयं प्राणै–रुज्झाञ्चक्रे खलैरिव ॥ २२ ॥
दृष्ट्वा तादृगवस्थं तं, तान् जगाद स दुःखितः । भवद्भिः किं कृतं ? भो भोः !, जामातैव हतो मम ॥ २३॥
तद्दुःखदुःखितास्तेऽपि, तत्स्वरूपे निवेदिते । सर्वे स्वस्वगृहं प्राप्ताश्चिन्तयन्तो भवस्थितिम् ॥ २४ ॥
जामातुस्तनयायाश्च, तादृक् तत्कर्म्मवैशसम् । विज्ञाय रतिसारोऽभूद्, धर्म्मसारस्ततः परं ॥ २५ ॥
अन्यदा सुयशास्तत्र, चतुर्ज्ञानी समागतः । श्रेष्ठी तद्देशनां श्रुत्वा–ऽपृच्छत्प्राच्यभवं तयोः ॥ २६ ॥
ज्ञानी प्राह पुरा शालि–ग्रामेऽभूत्काऽपि दुर्गता । महेला बालकसुता, कुटुम्बाद्यैः परिच्युता ॥ २७ ॥
सा महेभ्यगृहे नीच–कर्म्माण्युदरपूर्त्तये । करोति वत्सरूपाणि, चारयत्यङ्गजः पुनः ॥ २८ ॥
अन्यदावत्सरूपाणि, चारयित्वा सुतो गृहे । प्राप्तस्तज्जननी क्वाऽपि, कार्ये सक्ता तु नागता ॥ २९ ॥
बभूव महती वेला, स बालः क्षुधितो भृशम् । गृहप्राप्तां च तामूचे, साधिक्षेपमिदं वचः ॥ ३० ॥
शूलायां त्वमरे रण्डे !, क्षिप्ताऽभूः किमियच्चिरम् ? । बुभुक्षापीडितं मां किं, न जानासि ? विचेतने ! ॥३१ ॥
तथैव साऽपि प्रत्यूचे, छिन्नौ किं ते कराविमौ ? । यदत्र सिक्कके भोज्यं, त्वदर्थं सज्जितं मया ॥ ३२ ॥
कस्मान्न जगृहे ? मूर्ख !, दोषः को मेऽवशत्वतः । एवं ताभ्यां चिरं चक्रे, कलहो बहुलस्तदा ॥ ३३ ॥
अनालोचिततत्पापौ, तौ मातृतनयौ तव । सुताजामातरौ जातौ, तदिदं भवनाटकम् ॥ ३४ ॥

येन याद्दग्वचः प्रोक्तं, स ताद्दक् फलमश्नुते । ततस्तत्त्वमिदं श्रेष्ठिन् !, कार्यो वचनसंवरः ॥ ३५ ॥
श्रुत्वेति तस्य सविधे व्रतमाप्य साधोः, श्रेष्ठी बभूव सुखभाग् रतिसारनामा ।
भ्रान्तौ च तौ भवमनन्तमिति प्रबुध्य, वाच्यं विचार्य वचनं मधुरं मितं च ॥ ३६ ॥

इति श्रीमुद्रित-उपदेशसप्ततिकायावृत्तित उद्धृता

## जननी-पुत्र-कथा संम्पूर्णा

## २४ सत्योपरि जगतसिंहकथा

पूजात्रयावश्यकयुग्मरूपा, यो लभवत् प्रत्यह पन्च वेलाः। सत्यापयेत्स प्रवरस्तनूसान्, बुधैर्जगत्सिंह इव प्रशस्यः ॥१॥

श्रीपुरोजसुरत्राण-सभाश्रृङ्गारकारणम् । जगत्सिंह इति श्रेष्ठी, सञ्जातो योगिनीपुरे ॥ १ ॥
अखिलेऽपि पुरे ख्यातः, स एकः सत्यवादिनाम् । असत्यवादिन प्रायो, न प्रतिष्ठा ह्यवाप्यते ॥ २ ॥
स्याद्वह्नावपि शीतत्वं, पवनेऽपि स्थिरात्मता । तैथाऽपि प्रक्ष्यते तत्र, जातु नाऽसत्यवादितौ ॥ ३ ॥
तस्येति ख्यातिमाकर्ण्य, परीक्षार्थै कृतादरः । अपृच्छद् दुर्ज्जनान् भूपो, रहस्तन्मर्मवेदिनः ॥ ४ ॥
भो भोः ! निगद्यतामस्य, श्रेष्ठिनोऽस्ति कियद्धनम् ? । तेऽपि द्रोहपरा ऊचु-र्लक्षाः सप्ततिसंख्यया ॥ ५ ॥
कियद्दिनान्तरे भूप-स्तमुवाच कियद्धनम् । विद्यते तव ? सोऽप्याह, विमृश्य, कथयिष्यते ॥ ६ ॥

दिने द्वितीये सम्भाल्य, गृहोपस्करमाह सः । अध्यष्ट ८४ लक्षसंख्या मे, सन्ति वित्तस्य भूपते ! ॥ ७ ॥
एष प्रागुक्तसंख्यातो--ऽधिकोक्त्या सत्य एव यत् । प्रायः स्वद्रव्यसंख्यायां, स्तोकः स्यात्सत्यवादकः ॥ ८ ॥
ततस्तुष्टेन भूपेन, लक्षषोडशकार्प्पणात् । कृतः कोटीध्वजः श्रेष्ठी, सत्यस्याहो ! फलं कियत् ? ॥ ९ ॥
एकदा दर्शयामास, रत्नं तस्यार्कसोदरम् । भूपः स्वकोशादानाय्य, तं प्रत्येवमुवाच च ॥ १० ॥
एतस्य सदृशं रत्नं, किमन्यद्विद्यते भुवि ? । सोऽप्याह किं धरामध्ये, पातसाहद्वयं भवेत् ॥ ११ ॥
तद्वचोरञ्जितस्तस्या—ऽर्पयत्तद्रत्नमुत्तमम् । न्यासार्थं नहि भेदः स्याम्, द्वयोः प्रीतिः स्थिरान्तरा ॥ १२ ॥
इति प्रीत्या तयोः काले, कियत्यपि गते सति । केनापि हेतुना राजा, रुष्टस्तं प्रत्यथैकदा ॥ १३ ॥
सम्पदो महतामेव, तेषामेव स्युरापदः । नीचास्तादृग्विधा एव, चन्द्रधिष्ण्यनिदर्शनात् ॥ १४ ॥
शीर्षस्य पुष्पाभरणं, मुण्डनं च विधीयते । न चयापचयौ स्यातां, भ्रुवोः केशेषु कर्हिचित् ॥ १५ ॥
ततस्तं श्रेष्ठिनं भूपो, गुप्तिवेश्मन्यधारयत् । स्वकीयं तस्य रक्षार्थं, सेवकं च न्ययोजयत् ॥ १६ ॥
तदा च श्रेष्ठिनः षश्च—वेलाधर्म्मव्यतिक्रमः । दोदूयाकृन्न तु क्ष्माप—स्थापनात्परतन्त्रता ॥ १७ ॥
सेवकस्य ततस्तस्य, रहः सौवर्णटङ्ककम् । दापयित्वा निजाः पुण्य—वेलाः साधितवानसौ ॥ १८ ॥
यतो भवे भवे लक्ष्मीः, प्राप्यते भववृद्धिकृत् । न तु श्रीधर्म्मसामग्री, क्षयमेति भवो यथा ॥ १९ ॥
इत्येकविंशतिदिनां—स्तावत्टङ्ककदापनात् । स्वकृत्यान्यकरोद्धर्म्मा—दरो लोकोत्तरो ह्यसौ ॥ २० ॥
प्रसन्नोऽथ सुरत्राण—स्तं निजाङ्गविभूषणैः । पञ्चवर्णदुकूलैश्च, पञ्चशः पर्यधापयत् ॥ २१ ॥

ततश्चामन्दवाद्यौघै—र्बहुलोकैश्च संयुतः। श्रेष्ठी स्वगृहमायातो, ददानोऽर्थितमर्थिषु ॥ २२ ॥
क्रमेण विजने जाते, रक्षकोऽपि स टङ्ककान्। भूपादिभीतः प्रारेभे—ऽर्पयितुं गृह्यतामिति ॥ २३ ॥
श्रेष्ठ्यप्युवाच तं भद्र!, मया तेऽमी समर्पिताः। तत्त्वमेतान्यथाकामं, दत्स्व भुंक्ष्व सुखी भव ॥ २४ ॥
यत्ते प्रसादतो धर्म्मा—नुष्ठानं विदधे मया। एकोऽपि धर्म्मसम्बन्धी, क्षणः कोट्यापि दुर्लभः ॥ २५ ॥
तेषु पश्च मयैकेन, टङ्ककेन कृतार्थिताः। तत्तेऽधिकमपि द्रव्यं, दीयते गृह्यते कथम्? ॥ २६ ॥
इति प्रोच्य पुनर्दान—पूर्वं तं विससर्ज्ज सः। औचित्याचरणे सन्तः, किं मुह्यन्ति कदाचन? ॥ २७ ॥
सपादलक्षक्ष्मापालो—ऽन्यदा सेवार्थमागतः। सुरत्राणपुरो वस्तु—द्वयं ढौकितवानिदम् ॥ २८ ॥
चान्दनं शकलं मुक्ता—फलद्वन्द्वं च निर्मलम्। दृष्ट्वा तदल्पं भूपस्तु, क्षणं रुष्ट इवाऽभवत् ॥ २९ ॥
पश्यन्ति सभ्याः सर्व्वेऽपि, न तु कोऽपि परीक्षयेत्। दध्यौ सपादलक्षीयो—ऽप्यहो! मूर्खा अमी जनाः ॥ ३० ॥
अथोवाच जगत्सिंहो, द्वयमेतदमूल्यकम्। चान्दनस्याऽस्य खण्डस्य, पूर्वं माहात्म्यमुच्यते ॥ ३१ ॥
अग्नितप्तं शतमण—प्रमाणमपि जायते। एतत्खण्डेऽपि मध्यस्थे, तैलं हिमकणोपमम् ॥ ३२ ॥
किञ्च पाण्मासिकेनापि, ज्वरेण विधुरीकृतः। घृष्ट्वैतच्छकलं पीत्वा, भवेज्जन्तुर्निरामयः ॥ ३३ ॥
कौतुकं मौक्तिकद्वन्द्व—स्यापि देवाऽवधार्यताम्। विक्रीयैकतरद् द्वैती—यीकं ग्रन्थौ निबध्यते ॥ ३४ ॥
अवश्यं तच्च सन्ध्यायां, मिलत्युत्सुकमित्रवत्। श्रुत्वेति विस्मितो भूपः, परीक्षां कृतवांस्तयोः ॥ ३५ ॥
कथं वेत्सीति भूपेन, पृष्टः श्रेष्ठी पुनर्जगौ। आबाल्याभ्यासतो वस्तु—परीक्षा शिक्षिता मया ॥ ३६ ॥

एवं हि पुण्यविषये, परीक्षा युज्यते सताम् । बाह्यवस्तुपरीक्षासु, मोदते न मनो मम ॥ ३७ ॥
इत्थं तदुक्तितः प्रीतः, प्रसादं स्फीतमातनोत् । तस्मै सपादलक्षीय--क्ष्मापाय च स भूमिराट् ॥ ३८ ॥
एवं पञ्चाऽऽराधयन्पुण्यवेलाः, यावज्जीवं सत्यभाषां च जल्पन् । जैनं जाग्रच्छासनं भूरिकालं, चक्रे श्रेष्ठी श्रीजगत्सिंहनामा ॥

इति श्रीमुद्रित--उपदेशसप्ततिकावृत्तितः उद्धृता

## श्रीजगत्सिंहकथा संपूर्णा.

## २५ सन्तोषोपरि श्री विद्यापतिनृपकथा

परिग्रहप्रौढशिलावलम्बिनः, पतन्ति संसारमहाम्बुधौ जनाः ।
सन्तोषवज्रेण विभिद्य तां पुन--स्तरन्ति विद्यापतिवत्सुमेधसः ॥ १ ॥

पोतनाख्ये पुरे राजा, शूरः शूरपराक्रमैः । श्रेष्ठी विद्यापतिस्तस्य, भार्या शृङ्गारसुन्दरी ॥ १ ॥
स्वप्ने तमेकदा लक्ष्मी--रुवाच दशमे दिने । अहं यास्यामि:हे वत्स !, चिरात्त्वं मुत्कलाप्यसे ॥ २ ॥
प्रबुद्धः सोऽपि भार्यायै, तं वृत्तान्तं न्यवेदयत् । लक्ष्मीनाशे कथं कार्य--मिति चिन्तातुरः पुनः ॥ ३ ॥
विशुद्धबुद्धिः साऽप्याह, यद्येवं सकलाऽपि सा । व्ययनीया सुपात्रादा--वन्यथाऽपि हि यास्यति ॥ ४ ॥
अथ व्ययितुमारेभे, स श्रेष्ठी सकलं धनम् । तथाऽपि वर्द्धते किन्तु, कूपोदकमिवाऽन्वहम् ॥ ५ ॥
यथा यथा व्ययस्तस्य, गेहे वृद्धिस्तथा तथा । दीयमानोऽपि भारत्याः, कोशः किं नाम हीयते ? ॥ ६ ॥

जिनालये जिनेन्द्रस्य, पुरस्तात्तौ च दम्पती । परिग्रहव्रते मान—मेवं जगृहतुर्मिथः ॥ ७ ॥
त्रिः पूजा द्विः प्रतिक्रान्ति—र्भोजनं दानपूर्वकम् । वेषयोर्युग्ममेकैव, भार्या शृङ्गारसुन्दरी ॥ ८ ॥
मासे च विंशतिदिना—न्यावयोः शीलमुत्तमम् । कच्चोलं भाजनं चैकं, सौवर्णे ते उभे परम् ॥ ९ ॥
वासरे चैकशो भुक्तिः, पौषधः पर्ववासरे । चतुष्प्रकाराहारस्य, त्यागो रात्रौ च सर्वथा ॥ १० ॥
एकं च टङ्ककशतं, जीर्णनाणकसम्भवम् । मासयोग्यं गृहे धान्यं, नियमो द्विपदादिषु ॥ ११ ॥
सच्चित्तमेकं मुक्त्वाऽन्य—सचित्तनियमोऽस्तु नः । पूजोपकरणं सर्वं, मुत्कलं परमावयोः ॥ १२ ॥
एवं सम्यक्त्वमूलानि, व्रतानि द्वादशाऽप्यमू । प्रतिपद्य गृहं गत्वा, व्ययतः स्म समां श्रियम् ॥ १३ ॥
स विश्राणितसर्वस्वो, निश्चिन्तो दशमे दिने । रात्रौ सुप्तः श्रिया प्रोक्तः, स्थिताऽहं वत्स ! ते गृहे ॥ १४ ॥
त्वत्पुण्यदामभिर्बद्धा, क्वाऽप्यहं गन्तुमक्षमा । उपस्थितोऽपि विघ्नस्ते, क्षीणः पुण्याऽनुभावतः ॥ १५ ॥
शृङ्खलासदृशं पुण्यं, मर्कटीसदृशा रमा । तया नियन्त्रिता सा हि, चञ्चलाऽपि क्व गच्छति ॥ १६ ॥
अथाऽन्यदिवसे श्रेष्ठी, कृत्वा तामपि पात्रसात् । त्यक्त्वा गृहमपि ज्ञाति—वर्गीयान्मुत्कलाप्य च ॥ १७ ॥
मौलौ करण्डिकां कृत्वा, जिनार्च्चायाः स धार्म्मिकः । नगरान्निर्ययौ पुण्य—समूहो मूर्त्तिमानिव ॥ १८ ॥
प्रतोलीं यावदायात—स्तावत्तत्पुरवासिनः । अपुत्रस्य क्षितिपते—रासीदाकस्मिकी मृतिः ॥ १९ ॥
इतश्च पञ्चदिव्यानि सज्जितानि नियोगिभिः । साम्राज्यं च प्रदत्तं तै—स्तस्यैव श्रेष्ठिनस्तदा ॥ २० ॥
स प्राह नाहं राज्याऽर्हो—ऽभिषेकेन सृतं मम । तदा च दैवीवाग् जाता, तव भाग्यमहो ! महत् ॥ २१ ॥

मा कार्षीः प्रतिषेधं त—न्नाऽन्यथा भवितव्यता । श्रेष्ठ्यपि प्राह यद्येवं, तदा शृणुत मद्वचः ॥ २२ ॥
पूर्वं श्रीजिनबिम्बस्य, कुरुध्वमभिषेचनम् । पश्चान्ममेति तेऽप्येव—मकार्षुर्हर्षपूरिताः ॥ २३ ॥
एवं च प्राप्तसाम्राज्यः, स श्रेष्ठी सपरिच्छदः । नृपसौधमलञ्चक्रे, पुरस्त्रीकृतमङ्गलः ॥ २४ ॥
न्यस्य सिंहासने मुख्ये, जिनेन्द्रप्रतिमामसौ । स्वयं तत्पादपीठस्थो, राजकार्याण्यसाधयत् ॥ २५ ॥
रत्नवृष्टिं तदा चक्रुः, सम्यग्दृष्टिसुरा वराः । एकछत्रं जिनस्यैव, स राज्यं समसूत्रयत् ॥ २६ ॥
अकरोदकरं लोकं, धर्म्मकर्म्मणि कर्म्मठम् । सर्वत्राऽपि जिनाज्ञाऽभूत्, यथा राजा तथा प्रजाः ॥ २७ ॥
स पञ्चशतसंख्यानि, जिनचैत्यान्यचीकरत् । स्वर्णरत्नमयीस्तेषु, प्रतिमाश्च न्यवीविशत् ॥ २८ ॥
अखण्डितस्वनियमो, जिनाज्ञामप्यखण्डयन् । अखण्डं स चिरं राज्यं, चकार जिननिश्रया ॥ २९ ॥

इति नियम्य परिग्रहसागरं, स नृपतिः पदमव्ययमाप्तवान् ।
कुरुत तेन परिग्रहनिग्रहं, सपदि यूयमपीच्छथ चेत् सुखम् ॥ ३० ॥

इति श्रीमुद्रित-उपदेशसप्ततिकावृत्तित उद्धृता

## विद्यापतिनृपकथा सम्पूर्णा.

## २६ सामायिकव्रतोपरि केसरीचौरकथा

सामायिकं स्यात्समताविहीनं, निरर्थकं भव्यजनास्तदेतत् ।

आराध्यतां केसरिवज्जवद्भि—र्यथा समस्तानि सुखानि वः स्युः ॥ १ ॥

सामाइयं कुणंतो, समभावं सावओवि घडियदुगं । आउं सुरेसु बंधइ, इत्तियमेत्ताइं पलिआइं ॥ १ ॥
बाणवइकोडीओ, लक्खागुणसट्ठि सहसपणवीसं । नवसय पणवीसाए, सतिहा अडभाग पलिअस्स ॥ २ ॥
सामायिकं समतया, वियुक्तं यः समाचरेत् । करोति परमान्ने स, क्षारक्षेपं विमूढधीः ॥ ३ ॥
श्रीनिवासपुरे राजा, रिपुमर्द्दन इत्यभूत् । श्रेष्ठी समरसिंहाख्य–स्तत्र धर्म्मैककर्म्मठः ॥ १ ॥
तत्पुत्रः केसरीनामा, प्रकृत्येर्ष्यालुरुद्धतः । व्यसनी दुर्विनीतश्च, कुलाङ्गार इवाऽभवत् ॥ २ ॥
अथ निष्काशितो गेहा–त्स पित्रा सर्वसाक्षिकम् । ततो निरङ्कुशश्चक्रे, स चौर्यं सर्वसद्मसु ॥ ३ ॥
इत्थं पुरान्तस्तन्वाने, स्तैन्ये, तस्मिन्नृपोऽन्यदा । सभानिविष्टः प्रोवाच, कोऽयं ? कस्य सुतोऽथवा ? ॥ ४ ॥
तदा तत्र निविष्टस्त–त्तातः प्राह कृताञ्जलिः । दुष्पुत्रोऽयं मम स्वामिन् !, मया निर्वासितो गृहात् ॥ ५ ॥
चौर्यं विना न भोक्तव्यं, मयेत्यस्याऽस्त्यभिग्रहः । एतद्विशेषसम्बन्धः, पुनरित्यवधार्यताम् ॥ ६ ॥
एकदाऽयं सरस्तीरे, स्थितो ध्यायति दुष्टधीः । यावत्तावन्नभोमार्गे, पादुके पदयोर्दधत् ॥ ७ ॥
योगी कोऽप्यागतस्तत्र, ते मुक्त्वा तत्र यावता । स्नानादि कुरुते ताव–त्ते लात्वैष खमुद्ययौ ॥ ८ ॥
तयोः प्रभावादेकोऽपि, नैकतस्करकार्यकृत् । दुष्टरोग इवाऽसाध्यो, पुरस्याऽयं विभोऽभवत् ॥ ९ ॥
पुराधिष्ठातृदेव्यग्रे, वक्ति चैवं स्तुतिं सृजन् । चौरिकार्द्धेन ते भोगं, करिष्येऽर्द्धं ममाऽस्तु च ॥ १० ॥
भाविनी सफला सा चे–त्प्रसादात्तव देवि ! मे । अनुज्ञातस्तयाऽप्येष, सिद्धचौरस्ततोऽभवत् ॥ ११ ॥

भूपोऽथ लब्धतन्मर्म्मा, सारैः परिवृतो भटैः । देवीभवनमागत्य, प्रच्छन्नं स्थितवान् क्वचित् ॥ १२ ॥
तदा च तस्करोऽप्यागात्, तां देवीं जननीमिव । अर्चितुं पादुके पाणौकृत्य कस्याऽप्यविश्वसन् ॥ १३ ॥
भूपतिः प्रकटीभूय, तमाक्रोशति यावता । पक्षिवत्तावदुड्डीनः, पादुके परिधाय सः ॥ १४ ॥
याति यात्येष भोश्चौरः, इति भूपतिभाषिताः । कृतकोलाहलाः सर्वे, भटास्तमनुधाविताः ॥ १५ ॥
अभिग्रहस्य मे भङ्गो, नूनमद्य भविष्यति । यतो याति विना चौर्यं, दिनमद्यतनं मम ॥ १६ ॥
इत्यादि चिन्तयंश्चौरो—ऽप्यग्रेहे गच्छन्नधो भुवि । अपश्यन् ज्ञानिनं कञ्चि—द्वदन्तमिति पर्षदि ॥ १७ ॥
भो भोः प्राणिगणाः ! लब्ध्वा, मानुष्यं रत्नयोनिवत् । रत्नमेकं स्थिरीकार्यं, दुर्लभं द्रव्यकोटिभिः ॥ १८ ॥
ईदृग् रत्नं मयाऽद्याऽपि, चोरितं नस्ति किं कृतम् ? । इत्युत्कर्णोऽभवद्याव—त्तावन्मुनिरभाषत ॥ १९ ॥
एकं सामयिकं रत्नं, दुष्प्रापममरैरपि । रागद्वेषादिदस्युभ्यो, रक्षणीयं प्रयत्नतः ॥ २० ॥
अन्तर्मुहूर्त्तं चित्तस्य, यत्साम्यं तन्निगद्यते । सामायिकं यत्र हेयाः, कषाया एव केवलम् ॥ २१ ॥
न बाह्याऽऽडम्बरः कोऽपि, यस्य दानादिपुण्यवत् । तद्यथाऽवसरं कार्य—महोरात्रमुपासकैः ॥ २२ ॥
श्रुत्वेति केसरी चौर—स्तत्र सस्पृहतां दधत् । मनःसाक्षिकमातेने, व्रतं सामयिकाऽभिधम् ॥ २३ ॥
त्यक्तद्वेषो मनःशुद्ध—भावेन मुनिभाषितम् । अनुष्ठानमयं चक्रे, नृपादेरपि निर्भयः ॥ २४ ॥
**वावाराणं गुरुओ, मणवावारो जिणेहिं पन्नत्तो । जो नेइ सत्तमीए, अहवा मुक्खं पराणेइ ॥१॥**
तदा च लघुकर्म्मत्वा—त्तस्य केवलमुज्ज्वलम् । बभूव महिमानं च, चक्रुस्तस्य सुरेश्वराः ॥ २५ ॥

सहस्रपत्रसौवर्ण-कमले निषसाद सः । तदग्रे देशनां चक्रे, देवतादत्तवेपभृत् ॥ २६ ॥
अथ प्राप्तो नृपस्तत्र, तद्वृत्तं तादृशं पुनः । निरीक्ष्य विस्मितोऽत्यन्त-महो ! कर्म्मविचित्रता ॥ २७ ॥
केवली प्राह राजेन्द्र !, पश्य सामायिकव्रतम् । यस्य जातं क्षणार्द्धेऽपि, फलं लोकोत्तरं मम ॥ २८ ॥
एवं प्रबोध्य राजादीन्, लोप्त्रं सर्वं निवेद्य च । लोकोपकृतये चक्रे, विहारं वसुधातले ॥ २९ ॥
एवं स केसरिमुनिः प्रतिबोध्य भूरि-कालं जनान् विदलिताऽखिलकर्म्मजालः ।
प्राप्तो यदुच्चपदवीं तदिदं फलं हि, सामायिकव्रतभवं विमृशन्तु सन्तः ? ॥ ३० ॥

इतिश्री मुद्रित-उपदेशसप्ततिकावृत्तित उद्धृता

## केसरीचौरकथा संम्पूर्णा.

## २७ प्रतिक्रमणोपरि सज्जनदण्डनायककथा

भव्यैः प्रतिकमणमादरणीयमेत-द्यतपञ्चधा जिनवरैर्गदितं हितार्थम् ।
पापान्निवृत्तिरसकृत्सुकृते प्रवृत्ति-रित्थं बुधैर्यदभिधार्थ उदीरितश्च ॥ १ ॥

यदुक्तम्—मिच्छत्तपडिक्कमणं, तहेव अस्संजमे पडिक्कमणं । कसायाण पडिक्कमणं, जोगाण य अप्पसत्थाणं ॥ १ ॥
संसारपडिक्कमणं, चउव्विहं होइ आणुपुव्विए । तीए पच्चुप्पन्ने, अणागए चेव कालंमि ॥ २ ॥

स्वस्थानाद्यत्परस्थानं, प्रमादस्य वशाद्गतः । तत्रैव क्रमणं भूयः, प्रतिक्रमणमुच्यते ॥ ३ ॥
एकस्मिन्नपि यद्येते, स्युः प्रकाराः प्रतिक्रमे । पापादीनां तदा भाव-प्रतिक्रमणमुच्यते ॥ ४ ॥
प्रतिक्रमणमीदृक्षं, ये कुर्वन्ति दिने दिने । तेषामिहाऽप्यमुत्राऽपि, सुखं सज्जनवद्भवेत् ॥ ५ ॥
बाणवह्न्यर्क १२३५ संख्येये, वर्षे श्रीपत्तने पुरे । प्रथिलो भीमदेवोऽभूत्, भूपतिर्भाग्यभासुरः ॥ १ ॥
वेश्या सहस्रकलाख्या, तेन स्वान्तःपुरी कृता । राज्यराष्ट्रादिचिन्तां तु, कुरुते सैव भूपवत् ॥ २ ॥
श्रीमालज्ञातिवांस्तत्र, सज्जनो दण्डनायकः । राज्येऽधिकारी सम्यक्त्व—द्वादशव्रतभूषितः ॥ ३ ॥
स जिनं पूजयित्वैव, भुङ्क्ते शेते विधाय च । प्रतिक्रान्तिमिदं तस्य, निश्चयद्वितयं दृढम् ॥ ४ ॥
अन्येद्युः पत्तने प्राप्ता, यवनानामनीकिनी । सबालवृद्धः सर्वोऽपि, लोकोऽभूद्भयविह्वलः ॥ ५ ॥
सज्जनेन समं देवी, सैन्यमादाय सम्मुखम् । गता सज्जीकृता चाशु, रणक्षेत्रस्य भूमिका ॥ ६ ॥
अश्वानां मानवानां च, जिन २४ दन्त ३२ प्रमास्तदा । सहसा अभवन्नष्टा—दशहस्तिशतानि च ॥ ७ ॥
गजाऽश्वशस्त्रसंनाहान्, सुभटानां पृथक् पृथक् । देव्यार्पयत्सज्जनं च, सेनानीत्वेऽध्यतिष्ठिपत् ॥ ८ ॥
ब्राह्मये मुहूर्तेऽध्यारूढः, सज्जनो द्विरदं स्वयम् । युद्धाय प्रगुणीचक्रे, समग्रानपि सैनिकान् ॥ ९ ॥
हस्तिकुम्भस्थ एवाऽसौ, स्थापयित्वाऽक्षमालिकाम् । प्रतिक्रमणमातेने—ऽवसरज्ञा हि तादृशाः ॥ १० ॥
पार्श्वस्थाश्चिन्तयन्त्येव—मेष किं योत्स्यति प्रभुः । धार्म्मिको ह्येष युद्धं तु, साध्यं निर्दयमानसैः ॥ ११ ॥
ततो द्विघटिके जाते, प्रतिक्रम्य समाधिना । सामायिकं पारयित्वा, सैन्यं सर्वमचालयत् ॥ १२ ॥

हस्तिस्थेनापि यत्नेन, प्रतिक्रान्तिस्तदा कृता । तत्सैन्यमिलनायैवा-ऽन्यथा तत् शिथिलीभवेत् ॥ १३ ॥
प्रतिक्रमणवेलायाः, व्यतिपातोऽपि सम्भवी । एषोऽपि हेतुः सर्वं हि, कार्यं काले कृतं शुभम् ॥ १४ ॥
अथ युद्धं महज्जातं, सैन्ययोरुभयोरपि । गजाऽश्वरथपत्त्याद्याः, यथा स्वं स्वं डुढौकिरे ॥ १५ ॥
सज्जनेन तथा युद्धं, तथा चक्रे यथा क्षणात् । समस्तं यवनानीकं, काकनाशं ननाश तत् ॥ १६ ॥
सज्जनस्य परं घाताः, दश लग्नास्तदा तनौ । उत्पाट्य नीतो देव्यग्रे, साऽप्येनं प्रत्यचीकरत् ॥ १७ ॥
दुकुलाञ्चलवातेन, तस्य वातमवीजयत् । आहूयच्च महावैद्यान्, कृतास्तैश्च प्रतिक्रियाः ॥ १८ ॥
देव्यग्रे सुभटैरुक्तं, स्वामिन्यस्य विमुच्यते । रात्रौ 'एगिंदिया बेइन्दिआ' इत्याद्यमूचिवान् ॥ १९ ॥
प्रातर्युद्धं तथा चक्रे, यथा कोऽपि चकार न । देव्याह सज्जनं चक्रे, विरुद्धं किमिदं भवान् ? ॥ २० ॥
सोऽप्याह स्वामिनि ! स्वीयं, रात्रौ कार्यं कृतं मया । प्रातस्त्वदीयं येनेदं, तवाऽऽयत्तं वपुर्मम ॥ २१ ॥
ममायत्तं मनस्तेन, स्वकार्यं निर्मितं मया । श्रुत्वेति तं प्रशंसन्ति, धर्म्मे दार्ढ्यमहो ! कियद् ? ॥ २२ ॥
जगाम पत्तनं देवी, सज्जनोऽपि पटूकृतः । वैद्यैः क्रमेण श्रीधर्म्मं, राजकार्यं च स व्यधात् ॥ २३ ॥
सङ्कटे पतितेऽप्येवं, ये न मुञ्चन्ति निश्चयम् । तेषां हस्तगतैव स्यात्, निर्वाणसुखसन्ततिः ॥ २४ ॥
अन्यथा वा प्रतिक्रान्तिं, पञ्चधा ब्रुवते बुधाः । दिवारात्रौ तथा पक्षे, चातुर्मास्यां च वत्सरे ॥ २५ ॥
सपडिक्कमणो धम्मो, पुरिमस्स य पच्छिमस्स य जिणस्स । मज्झिमगाण जिणाणं, कारणजाए पडिक्कमणं ॥१॥
समणेन सावएण य, अवस्सकायव्वयं हवइ जम्हा । अंतो अहो निसस्सा, तम्हा आवस्सयं नाम ॥ २ ॥

इत्थं प्रतिक्रमणमप्यनणुप्रमाद—मुत्सृज्य भव्यनिवहाः ! क्रियतां भवद्भिः ।
यस्मिन्कृतेऽथ भवभारवियुक् शरीरी, भारप्रमुक्त इव भारवहो लघुः स्यात् ॥ २६ ॥

इति श्रीमुद्रित-उपदेशसप्ततिकावृत्तित उद्धृता

## सज्जनदंडनायककथा संपूर्णा.

## २८ धान्यसंग्रहोपरि तिलकश्रेष्ठीकथा

श्रेष्ठ्यासीत्तिलको नाम, पुरेऽचलपुरे पुरा । असौ पुरेषु ग्रामेषु, चाकरोद्धान्यसंग्रहम् ॥ १ ॥
माषमुद्गतिलव्रीहिगोधूमचणकादिकम् । ददौ सार्द्धिकया धान्यं, काले सार्द्धं च सोऽग्रहीत् ॥ २ ॥
धान्यैर्धान्यं धनैर्धान्यं, धान्यं जीवधनैरपि । उपायैश्चाग्रहीद्धान्यं, ध्यायन् धान्यं स तत्त्ववत् ॥ ३ ॥
दुर्भिक्षकाले धान्येभ्यः, प्रत्युपात्तैर्महाधनैः । बभार परितो धान्यै-रिवासौ धान्यकोष्ठकान् ॥ ४ ॥
पुनः सुभिक्षे धान्यं स, क्रीत्वा क्रीत्वा समग्रहीत् । लब्धास्वादः पुमान् यत्र, तत्रासक्तिं न मुञ्चति ॥ ५ ॥
कीटकोटिवधं नैषोऽ-जीगणत् कणसंग्रहे । पीडां पञ्चेन्द्रियाणा-मप्यतिभाराधिरोपणात् ॥ ६ ॥
नैमित्तः कोऽपि तस्याख्यद्-भाविदुर्भिक्षमैषमः । सर्वस्वेनाथ सोऽक्रीणात्कणान् पुनरतृप्तिकः ॥ ७ ॥
वृद्धयाऽपि द्रव्यमाकृष्याग्रहीद्धान्यमनेकधा । स्थानाभावे गृहेऽक्षैप्सीत् , किं न कुर्वीत लोभवान् ॥ ८ ॥

असौ जगदमित्रस्य मित्रस्येवोन्मनास्ततः । दुर्भिक्षस्यैष्यतो मार्गमीक्षाञ्चक्रे दिने दिने ॥ ९ ॥
अथ वर्षाप्रवेशेऽपि ववर्षोपेत्य सर्वतः । धारासारैर्घनस्तस्य हृदयं दारयन्निव ॥ १० ॥

गोधूममुद्गकलमाश्चणका मकुष्टा, माषास्तिलास्तदपरेऽपि कणा विनश्य ।
यास्यन्ति संप्रति हहेति स तैरतृप्तो, हृत्स्फोटजातमरणान्नरकं प्रपेदे ॥ ११ ॥

इति श्रीमुद्रित–योगशास्त्रवृत्तितः उद्धृता

## तिलकश्रेष्ठिकथा संपूर्णा.

## २९ सुवर्णसंग्रहकार नन्दराजकथा

प्राच्यां महेन्द्रनगरीप्रतिबिम्बमिवोच्चकैः । आख्यया पाटलीपुत्रमित्यस्ति प्रवरं पुरम् ॥ १ ॥
आसीत्तत्रातिसुत्रामा, शत्रुवर्गविसूत्रणे । त्रिखण्डवसुधाधीशो, नन्दो नाम नरेश्वरः ॥ २ ॥
सोऽकराणां करं चक्रे, सकराणां महाकरम् । महाकराणामपि च, किञ्चिच्चक्रे करान्तरम् ॥ ३ ॥
यं कञ्चिद्दोषमुत्पाद्य, धनिभ्यो धनमग्रहीत् । छलं वहति भूपानां, हलं नेति नयं वदन् ॥ ४ ॥
सर्वोपायैर्धनं लोका–न्निष्कृपः स उपाददे । अपामब्धिर्नृपोऽर्थानां, पात्रं नान्य इति ब्रुवन् ॥ ५ ॥
तथाऽर्थं सोऽग्रहील्लोका–ल्लोकोऽभून्निर्धनो यथा । भूमावूर्णायुचीर्णायां न खलु प्राप्यते तृणम् ॥ ६ ॥

हिरण्यनाणकाऽऽख्याऽपि, तेन लोकेषु नाशिता । प्रवृत्तो व्यवहारोऽपि, चर्मणो नाणकैस्तदा ॥ ७ ॥
पाखण्डिनोऽपि वेश्या अप्यसावर्थमदण्डयत् । हुताशनः सर्वभक्षी, न हि किञ्चिद्विमुञ्चति ॥ ८ ॥
श्रीवीरमोक्षादेकोन–विंशत्यब्दशतेषु यः । साग्रेषु भावी किं सोऽयं, कल्कीति जनवागभूत् ॥ ९ ॥
आक्रोशान् पश्यतोऽप्यस्य, भूमिभाजनभोजनः । जनो ददौ गतभयो, भयं भवति भाजने ॥ १० ॥
स स्वर्णैः पर्वतांश्चक्रे, पूरयामास चावटान् । भाण्डागाराणि चापूरि, पूर्णकामस्तु नाभवत् ॥ ११ ॥
आकर्ण्य तत्तथाऽयोध्या–नाथेनाथ हितैषिणा । तं प्रबोधयितुं वाग्मी, दूतः प्रेषित आगमत् ॥ १२ ॥
सर्वतोऽप्याहृतश्रीकं, निःश्रीकं तं तथापि हि । दूतो भूपमथापश्य–न्नत्वा चोपाविशत्पुरः ॥ १३ ॥
सोऽनुज्ञातो नृपेणोचे, श्रुत्वा मत्स्वामिवाचिकम् । कोपितव्यं न देवेन, न हिताश्राद्धभाषिणः ॥ १४ ॥
अवर्णवादो देवस्य, यः परम्परया श्रुतः । स प्रत्यक्षीकृतो ह्यद्य, न निर्मूला जनश्रुतिः ॥ १५ ॥
अन्यायतोऽर्थलेशोऽपि, राज्ञः सर्वयशश्छिदे । अप्येकं तुम्बिकाबीजं, गुडभारान् विनाशयेत् ॥ १६ ॥
आत्मभूताः प्रजा राज्ञो, राजा न च्छेत्तुमर्हति । क्रव्यादा अपि न क्रव्यं, निजमश्नन्ति जातुचित् ॥ १७ ॥
प्रजाः पुषाण पुष्णन्ति, पोषिता एव ता नृपम् । वश्याऽपि न ह्यनड्वाही, दत्ते दुग्धमपोषिता ॥ १८ ॥
सर्वदोषप्रसूर्लोभो, लोभः सर्वगुणापहः । लोभस्तत्त्यज्यतामेत–त्त्वद्धितो वक्ति मत्प्रभुः ॥ १९ ॥
नन्दोऽपि तद्गिरा दाव–दग्धभूरिव वारिणा । अत्युष्णबाष्पममुञ्चद्, दग्धुकाम इवाशु तम् ॥ २० ॥
राजदौवारिको जातु, न वध्य इति नन्दराट् । उत्थाय गर्भवेश्मान्तः, सशिरोऽर्त्तिरिवाविशत् ॥ २१ ॥

नासौ सदुपदेशानां, जवासक इवाम्भसाम् । योग्य इत्यामृशन् दूतोऽ—प्यगात् स्वस्वामिनोऽन्तिकम् ॥ २२ ॥
नन्दोऽप्यन्यायपापोत्थैर्वेदनादानदारुणैः । रोगैरिहापि संप्राप्तः, परमाधार्मिकैरिव ॥ २३ ॥
वेदनाभिर्दारुणाभिः, पीड्यमानो यथा यथा । नन्दश्चक्रन्द लोकोऽभू—ज्जातानन्दस्तथा तथा ॥ २४ ॥
पच्यमानो भृज्यमानो, दह्यमान इव व्यथाम् । अवाप नन्दः स्तोकं हि, सर्वं तादृक्षपाप्मनः ॥ २५ ॥
ये भूतले विनिहिता गिरिवच्च कूटीभूताश्च येऽद्य मम काञ्चनराशयस्ते ।
कस्य स्युरित्यभिगृणन्नवितृप्त एव, मृत्वा निरत्तभवदुःखमवाप नन्दः ॥ २६ ॥

इति श्रीमुद्रित—योगशास्त्रवृत्तितः उद्धृता

## नन्दनृपकथा संपूर्णा.

## ३० सन्तोषोपरि अभयकुमारकथा

अन्यदा गणभृद्देव—सुधर्मस्वामिनोऽन्तिके । प्रव्रज्यामग्रहीत्कोऽपि, विरक्तः काष्ठभारिकः ॥ १ ॥
विहरन् स पुरे पौरैः, पूर्वावस्थाऽनुवादिभिः । अभर्त्स्यतोपाहस्य—तागर्ह्यतापि पदे पदे ॥ २ ॥
नावज्ञां सोढुमीशोऽत्र, विहरामि तदन्यतः । इति व्यज्ञपयत् स श्री—सुधर्मस्वामिनं ततः ॥ ३ ॥
सुधर्मस्वामिनाऽन्यत्र, विहारक्रमहेतवे । आपृच्छ्यताभयः पृच्छन्, ज्ञापितस्तच्च कारणम् ॥ ४ ॥

दिनमेकं प्रतीक्षध्व—मूर्ध्वं यत्प्रतिभाति वः । तद्विधत्तेत्ययाचिष्ट, प्रणम्य श्रेणिकात्मजः ॥ ५ ॥
सोऽथ राजकुलात्कृष्ट्वा, रत्नकोटित्रयीं वहिः । दास्याम्येतामेव लोकाः, पटहेनेत्यघोषयत् ॥ ६ ॥
ततश्चेयुर्जनाः सर्वे-ऽप्यवोचदभयोऽप्यदः । जलाग्निस्त्रीवर्जको य-स्तस्य रत्नोच्चयोऽस्त्वयम् ॥ ७ ॥
लोकोत्तरमिदं लोकः, स्वामिन् ! किं कर्त्तुमीश्वरः ? इति तेष्वाभाषमाणे-ष्वभयोऽपीत्यभाषत ॥ ८ ॥
यदि वो नेदृशः कश्चि-द्रत्नकोटीत्रयं ततः । जलाग्निस्त्रीमुचः काष्ठ-भारिणोऽस्तु महामुनेः ॥ ९ ॥
सम्यगीदृगयं साधुः, पात्रं दानस्य युज्यते । मुधाऽसौ जहसेऽस्माभि-रिति तैर्जगदेऽभयः ॥ १० ॥
अस्य भर्त्सोपहासादि, न कर्त्तव्यमतः परम् । आदिष्टमभयेनैवं, प्रतिपद्य ययुर्जनाः ॥ ११ ॥
एवं बुद्धिमहाम्भोधिः, पितृभक्तिपरोऽभयः । निरीहो धर्मसंसक्तो, राज्यमन्वशिषत्पितुः ॥ १२ ॥
वर्त्तमानः स्वयं धर्मे, स प्रजा अप्यवर्त्तयन् । प्रजानां च पशूनां च, गोपायत्ताः प्रवृत्तयः ॥ १३ ॥
राजा चक्रे जजागार, यथा द्वादशधा स्थिते । तथा श्रावकधर्मे-ऽसावप्रमद्वरमानसः ॥ १४ ॥
वहिरङ्गान् यथाऽजैषीद्--दुर्जयानपि विद्विषः । अन्तरङ्गानपि तथा, स लोकद्वयसाधकः ॥ १५ ॥
तमूचे श्रेणिकोऽन्येद्यु-र्वत्स ! राज्यं त्वमाश्रय । अहं श्रयिष्ये श्रीवीर-शुश्रूषासुखमन्वहम् ॥ १६ ॥
पित्राज्ञाभङ्गसंसार-भीरुरित्यभयोऽब्रवीत् । यदादिशत तत्साधु, प्रतीक्षध्वं क्षणं परम् ॥ १७ ॥
इतश्च भगवान् वीरः, प्रव्राज्योदायनं नृपम् । मरुमण्डलतस्तत्राभ्यागत्य समवासरत् ॥ १८ ॥
ततो गत्वाऽभयो नत्वा, पप्रच्छ चरमं जिनम् । राजर्षिः कोऽन्तिमोऽथाख्यत्तत्रैवोदायनं प्रभुः ॥ १९ ॥

गत्वोचे श्रेणिकं सोऽस्मि, राजा चेन्न ऋषिस्तदा । श्रीवीरोऽन्तिमराजर्षिं शशंसोदायनं यतः ॥ २० ॥
श्रीवीरं स्वामिनं प्राप्य, प्राप्य त्वत्पुत्रतामपि । नो छेत्स्ये भवदुःखं चे-न्मत्तः कोऽन्योऽधमस्ततः ॥२१॥
नाम्नाऽहमभयस्तात ! सभयोऽस्मि भवाद्भृशम् । भुवनाभयदं वीरं, तच्छ्रयामि समादिश ॥ २२ ॥
तदलं मम राज्येना-भिमानसुखहेतुना । यतः सन्तोषसाराणि, सौख्यान्याहुर्महर्षयः ॥ २३ ॥
निर्बन्धाद्ग्राह्यमाणोऽपि, न यदा राज्यमग्रहीत् । तदाऽभयो व्रतायानु-जज्ञे राज्ञा प्रमोदतः ॥ २४ ॥
राज्यं तृणमिव त्यक्त्वा, सन्तोषसुखभागसौ । दीक्षां चरमतीर्थेश-वीरपादान्तिकेऽग्रहीत् ॥ २५ ॥
संतोषमेवमभयः सुखदं दधानः, सर्वार्थसिद्धिसुरधाम जगाम मृत्वा ।
सन्तोषमेवमपरोऽप्यवलम्बमान-स्तान्युत्तरोत्तरसुखानि नरो लभेत ॥ २६ ॥

इति श्रीमुद्रित-योगशास्त्रवृत्तितः उद्धृता

## अभयकुमारकथा संपूर्णा.

## ३१ सामायिकव्रतोपरि चन्द्रावतंसनृपकथा

अस्ति साकेतनगरं, श्रीसङ्केतनिकेतनम् । हसितेन्द्रपुरश्रीकं, सितार्हच्चैत्यकेतनैः ॥ १ ॥
तत्र लोकदृगानन्दो, द्वितीय इव चन्द्रमाः । चन्द्रावतंसो राजा-ऽसीदवतंस इवावनेः ॥ २ ॥

स यथा धारयामास, शस्त्राणि त्राणहेतवे । तीक्ष्णानि शिक्षावशतो, व्रतान्यपि तथा सुधीः ॥ ३ ॥
माघमासे विभावर्यां, सोऽन्यदा वासवेश्मनि । आदीपज्वलनं स्थास्या--मीति सामायिके स्थितः ॥ ४ ॥
तच्छय्यापालिका ध्वान्तं, स्वामिनो मा स्म भूदिति । याते प्राग्यामिनीयामे, प्रदीपे तैलमक्षिपत् ॥ ५ ॥
गते यामे द्वितीयस्मिन्न--पि सा भक्तमानिनी । जाग्रती दीपके क्षीण--तैले तैलं न्यधात्पुनः ॥ ६
त्रियामायास्तृतीयस्मि--न्नपि यामे व्यतीयुषि । मल्लिकायां प्रदीपस्य, तैलं चिक्षेप सा पुनः ॥ ७ ॥
विभातायां विभावर्यामवसानमथासदत् । श्रमोत्पन्नव्यथाक्रान्तो, राजा स इव दीपकः ॥ ८ ॥

सामायिकं समधिगम्य निहत्य कर्म, चन्द्रावतंसनृपतिस्त्रिदिवं ततोऽगात् ।
सामायिकव्रतजुषो गृहिणोऽपि सद्यः, क्षीयेत कर्म निचितं सुगतिर्भवेच्च ॥ ९ ॥

इति श्रीमुद्रित--योगशास्त्रवृत्तित उद्धृता

## चन्द्रावतंसनृपकथा सम्पूर्णा.

## ३२ उपसर्गसहने कामदेवश्रावककथा.

अनुगङ्गं पतद्धंस--श्रेणीभिरिव चारुभिः । चैत्यध्वजै राजमाना, चम्पेत्यस्ति महापुरी ॥ १ ॥
भोगिभोगायतभुज--स्तम्भः कुलगृहं श्रियः । जितशत्रुरिति नाम्ना, तस्यामासीद् महीपतिः ॥ २ ॥

अभूद् गृहपतिस्तस्यां, कामदेवाभिधः सुधीः । आश्रयोऽनेकलोकानां, महातरुरिवाध्वनि ॥ ३ ॥
लक्ष्मीरिव स्थिरीभूता, रूपलावण्यशालिनी । अभूद् भद्राकृतिर्भद्रा, नाम तस्य सधर्मिणी ॥ ४ ॥
निधौ षट् स्वर्णकोट्यः, षड् वृद्धौ षड् व्यवहारगाः । व्रजाः षट् चास्य दश--गोसहस्रमितयोऽभवन् ॥ ५ ॥
तदा च विहरन्नुर्वीं, तत्रोर्वीमुखमण्डने । पुण्यभद्राभिधोद्याने, श्रीवीरः समवासरत् ॥ ६ ॥
कामदेवोऽथ पादाभ्यां, भगवन्तमुपागमत् । शुश्राव च श्रोत्रसुधां, स्वामिनो धर्मदेशनाम् ॥ ७ ॥
कामदेवस्ततो देव--नरासुरगुरोः पुरः । प्रपेदे द्वादशविधं, गृहिधर्मं विशुद्धधीः ॥ ८ ॥
प्रत्याख्यात् स विना भद्रां, स्त्रीर्व्रजान् षड्व्रजीं विना । निधौ वृद्धौ व्यवहारे, षट् षट् कोटीर्विना वसु ॥ ९ ॥
हलपञ्चशतीं मुक्त्वा--ऽत्याक्षीत् क्षेत्राण्यनांसि तु । दिग्यात्रिकाणि, वोढृणि, पञ्च पञ्च शतान्यृते ॥ १० ॥
दिग्यात्रिकाणि चत्वारि, चत्वारि, प्रवहन्ति च । विहाय वहनान्येष, प्रत्याख्यद् वहनान्यपि ॥ ११ ॥
विनैकां गन्धकाषायीं, स तत्याजाङ्गमार्जनम् । दन्तधावनमप्यार्द्रा--मपास्य मधुयष्टिकाम् ॥१२ ॥
ऋते च क्षीरामलकात् , फलान्यन्यानि सोऽमुचत् । अभ्यङ्गं च विना तैले, सहस्रशतपाकिमे ॥ १३ ॥
विना सुगन्धिगन्धाढ्यमुद्वर्तनकमत्यजत् । विनाष्टावौष्ट्रिकानम्भस्कुम्भान् मज्जनकर्म च ॥ १४ ॥
ऋते च क्षौमयुगलाद्, वस्त्रं सर्वमवर्जयत् । चन्दनागुरुघुसृणा--न्यपास्यान्यद् विलेपनम् ॥ १५ ॥
जातीस्रजं च पद्मं च, विना कुसुममत्यजत् । कर्णिकां नाममुद्रां च, विहायाभरणान्यपि ॥ १६ ॥
तरुष्कागुरुधूपेभ्य, ऋते धूपविधिं जहौ । घृतपूरात् खण्डखाद्या--दन्यद् भक्ष्यमवर्जयत् ॥ १७ ॥

काष्ठपेयां विना पेया--मोदनं कलमं विना । माषमुद्गकलायेभ्य, ऋते सूपं च सोऽमुचत् ॥ १८ ॥
तत्याज च घृतं सर्व-मृते शारदगौघृतात् । शाकं स्वस्तिकमण्डूक्याः, पल्यङ्काच्चापरं जहौ ॥ १९ ॥
अन्यत् स्नेहाम्लदाल्यम्लात्, तीमनं वारिखाम्भसः । जहौ सुगन्धिताम्बूलाद्, मुखवासमथापरम् ॥ २० ॥
ततः प्रभुं स वन्दित्वा, ययौ निजनिकेतनम् । तद्भार्याप्येत्य जग्राह, स्वाम्यग्रे श्रावकव्रतम् ॥ २१ ॥
कुटुम्बभारमारोप्य, ज्येष्ठपुत्रे ततः स्वयम् । तस्थौ पौषधशालाया-मप्रमादी व्रतेषु सः ॥ २२ ॥
तस्थुषस्तस्य तत्राथ, निशीथे क्षोभहेतवे । पिशाचरूपभृद् मिथ्या- दृष्टिः कोऽप्याययौ सुरः ॥ २३ ॥
शिरोरुहाः शिरस्यस्य, कर्कशाः कपिशत्विषः । चकासामासुरापक्वाः, केदार इव शालयः ॥ २४ ॥
भाण्डभित्तनिभं भालं, बभ्रुपुच्छोपमे भ्रुवौ । कर्णौ सूर्पाकृती युग्म--चुल्लीतुल्या च नासिका ॥ २५ ॥
उष्ट्रोष्ठलम्बिनावोष्ठौ, दशनाः फालसन्निभाः । जिह्वा सर्पोपमा श्मश्रु, वाजिवालधिसोदरम् ॥ २६ ॥
तप्तमूपानिभे नेत्रे, हनू सिंहहनूपमौ । हलास्यतुल्यं चिबुकं, ग्रीवोष्ट्रग्रीवया समा ॥ २७ ॥
उरः पुरकपाटोरु, भुजौ भुजगभीषणौ । पाणी शिलाभावङ्गुल्यः शिलापुत्रकसन्निभाः ॥ २८ ॥
पातालतुल्यमुदरं, नाभिः कूपसहोदरा । शिश्नं चाजगरप्रायं, वृषणौ कुतुपोपमौ ॥ २६ ॥
जङ्घे तालद्रुमाकारे, पादौ शैलशिलोपमौ । कोलाहलरवोऽकाण्डा--शनिध्वनिभयानकः ॥ ३० ॥
स मूर्ध्न्याखुस्रजं बिभ्रत्, कण्ठे च सरटस्रजम् । नकुलान् कर्णिकास्थाने-ऽङ्गदस्थाने च पन्नगान् ॥ ३१ ॥
क्रुद्धान्तकसमुत्क्षिप्त-तर्जनाङ्गुलिदारुणम् । उदस्यन्नपकोशासिं, कामदेवं जगाद सः ॥ ३२ ॥

अप्रार्थितप्रार्थक ! रे !, किमारब्धमिदं त्वया । किं स्वर्गमपवर्गं वा, वराक ! त्वमपीच्छसि ? ॥ ३३ ॥
मुञ्चारब्धमिदं नो चेद्–नेन निशितासिना । तरोरिव फलं स्कन्धात्, पातयिष्यामि ते शिरः ॥ ३४ ॥
तर्जयत्यपि तत्रैवं, समाधेर्न चचाल सः । शरभः शैरिभारावैः, किं क्षुभ्यति कदाचन ? ॥ ३५ ॥
कामदेवः शुभध्यानाद्, न चचाल यदा तदा । व्याजहार तथैवायं, द्विस्त्रिस्त्रिदशपांसनः ॥ ३६ ॥
तत्राप्यक्षुभ्यतः सोऽस्य, क्षोभायैभं वपुर्व्यधात् । स्वशक्त्यन्तमनालोक्य, विरमन्ति खला न हि ॥ ३७ ॥
सोऽधत्त विग्रहं तुङ्गं, सजलाम्भोदसोदरम् । सर्वतोऽप्येत्य मिथ्यात्वं, राशीभूतमिवैकतः ॥ ३८ ॥
स दीर्घदारुणाकारं, विषाणद्वन्द्वमुन्नतम् । धारयामास कीनाश–भुजदण्डविडम्बकम् ॥ ३९ ॥
किञ्चिदाकुञ्चितां शुण्डां, कालपाशमिवोद्वहन् । कामदेवं जगादैवं, देवः कूटैकदैवतम् ॥ ४० ॥
मायाविन् ! मुच्यतां माया, सुखं तिष्ठ मदाज्ञया । पाखण्डगुरुणा केन, त्वमस्येवं विमोहितः ? ॥ ४१ ॥
न चेद् मुञ्चस्यमुं धर्मं, शुण्डादण्डेन तद् द्रुतम् । ऋक्ष्यामि त्वामितः स्थानाद्, नेष्यामि च नभोऽङ्गणे ॥ ४२ ॥
व्योम्नः पतन्तं दन्ताभ्यां, प्रेययिष्यामि चान्तरा । अवनम्य ततस्ताभ्यां, दारयिष्यामि दारुवत् ॥ ४३ ॥
पादैः कर्दममर्दं च, त्वां मर्दिष्यामि निर्दयम् । एकपीण्डीकरिष्यामि, तिलपिष्टिमिव क्षणात् ॥ ४४ ॥
उन्मत्तस्येव तस्यैवं, घोरं व्याहरतोऽपि हि । नोत्तरं कामदेवोऽदाद्, ध्यानसंलीनमानसः ॥ ४५ ॥
असंक्षुभितमीक्षित्वा, कामदेवं दृढाशयम् । द्विस्त्रिश्चतुरभाषिष्ट, तथैव स दुराशयः ॥ ४६ ॥
ततोऽप्यभीतं तं प्रेक्ष्य, शुण्डादण्डेन सोऽग्रहीत् । व्योमन्युच्छालयामास, प्रतीयेष च पूलवत् ॥ ४७ ॥

दलयामास दन्ताभ्यां, पादन्यासैर्ममर्द च । धर्मकर्मविरुद्धानां, किमकृत्यं दुरात्मनाम् ? ॥ ४८ ॥
अधिसेहे च तत् सर्वं, कामदेवो महामनाः । मनागपि च न स्थैर्यं, जहौ गिरिरिव स्थिरः ॥ ४९ ॥
तस्मिन्नचलिते ध्यानादीदृशेनापि कर्मणा । सदर्पः सर्परूपं स, विदधे विबुधाधमः ॥ ५० ॥
देवः पूर्ववदेवोचे, स तं भापयितुं ततः । कामदेवस्तु नाभैषीद्, ध्यानसंवर्मितः सुधीः ॥ ५१ ॥
भूयो भूयस्तथोक्त्वा तं, निर्भीकं प्रेक्ष्य दुःसुरः । आतोद्यमिव वध्रेण, स्वभोगेनाभ्यवेष्टयत् ॥ ५२ ॥
निःशूकमेव दशनै–र्दंदशूको ददंश तम् । स तु ध्यानसुधामग्नो, न तद्बाधामजीगणत् ॥ ५३ ॥
दिव्यरूपं ततः कृत्वा, द्युतिद्योतितदिङ्मुखम् । सुरः पौषधशालायां, विवेशैवमुवाच च ॥ ५४ ॥
धन्योऽसि कामदेव ! त्वं, देवराजेन संसदि । प्रशंसाऽकारि भवतो—ऽसहिष्णुस्तामिहागमम् ॥ ५५ ॥
प्रभवः प्राभवेणापि, वर्णयन्ति ह्यवस्त्वपि । अतः परीक्षितोऽसि त्वं, नानारूपभृता मया ॥ ५६ ॥
त्वां यथाऽवर्णयच्छक्र—स्तथैवासि न संशयः । क्षम्यतामपराधो मे, परीक्षणभवस्त्वया ॥ ५७ ॥
प्रययावभिधायैवं, स देवो देवसद्मनि । कामदेवोऽपि शुद्धात्मा, प्रतिमां तामपारयत् ॥ ५८ ॥
उपसर्गसहिष्णुं तम–श्लाघिष्ट स्वयं प्रभुः । सभायां भगवान् वीरो, गुरवो गुणवत्सलाः ॥ ५९ ॥
कामदेवो द्वितीयस्मिन्नह्नि पारितपौषधः । त्रिजगत्स्वामिनः पाद–वन्दनार्थमथागमत् ॥ ६० ॥
जगद्गुरुरभाषिष्ट, गौतमप्रभृतीनिति । गृहिधर्मेऽप्यसावेव–मुपसर्गान् विसोढवान् ॥ ६१ ॥
सर्वसङ्गपरित्यागाद्, यतिधर्मपरायणैः । तद्विशेषेण सोढव्या, उपसर्गा भवादृशैः ॥ ६२ ॥

कर्मनिर्मूलनोपायान्, श्रावकप्रतिमास्ततः । एकादशापि शिश्राय, कामदेवः क्रमेण ताः ॥ ६३ ॥
सोऽथ संलेखनां कृत्वा, प्रपेदेऽनशनव्रतम् । परं समाधिमापन्नः, कालधर्ममुपाययौ ॥ ६४ ॥
सोऽरुणाभे विमानेऽभूद्, चतुष्पल्यस्थितिः सुरः । च्युत्वा ततो विदेहेषूत्पद्य सिद्धिं व्रजिष्यति ॥ ६५ ॥
यथोपसर्गेऽपि निसर्गधैर्यात्, स कामदेवो व्रततत्परः सन् ।
श्लाघ्योऽभवत् तीर्थकृतां तथाऽन्ये-ऽप्येवंविधा धन्यतमाः पुमांसः ॥ ६६ ॥

इति श्रीमुद्रित-योगशास्त्रवृत्तितः उद्धृता

## कामदेवश्रावककथा संपूर्णा.

## ३३ जिनवचनभावनायां दृढप्रहारीकथा.

कस्मिंश्चिन्नगरे कश्चिदा-सीद्द्विजातिरुद्भटः । प्रजासु कर्तुमन्यायान्, प्रावर्त्तत स पापधीः ॥ १ ॥
आरक्षपुरुषैरेष, ततो निर्वासितः पुरात् । व्याधहस्तमिव श्येन-श्चौरपल्लीं जगाम च ॥ २ ॥
नृशंसचरितैस्तै-रात्मनस्तुल्य इत्यसौ । चौरसेनाधिपतिना, पुत्रत्वेनान्वमन्यत ॥ ३ ॥
चौरसेनापतौ तस्मिन्न-वसानमुपेयुषि । तत्पुत्र इति तत्स्थाने, स बभूव महाभुजः ॥ ४ ॥
निष्कृपं प्रहरत्येष, सर्वेषां प्राणिनां यतः । ततो दृढप्रहारीति, नाम्ना निजगदे जनैः॥ ५ ॥

अन्येद्युर्विश्वकुट्टाक-लुण्टाकभटपेटकैः । स कुशस्थलनामानं, ग्रामं लुण्टयितुं ययौ ॥ ६ ॥
ब्राह्मणो देवशर्मेति, तत्र दारिद्र्यविद्रुतः । अवकेशीफलमिव, क्षीरान्नं याचितोऽर्भकैः ॥ ७ ॥
पर्यटय सकले ग्रामे, क्वापि क्वापि स तन्दुलान् । क्वापि क्वापि पयोऽभ्यर्थ्य, परमान्नमपीपचत् ॥ ८ ॥
नद्यां स्नातुं ययावेष, यावत्तावत् तदोकसि । ते क्रूरतस्कराः पेतु-र्दैवं दुर्बलघातकम् ॥ ९ ॥
तेषामेकतमो दस्यु-रपश्यत्तस्य पायसम् । क्षुधातुरः प्रेत इव, तदादाय पलायितः ॥ १०
आच्छिद्यमाने तस्मिंस्तु, पायसे जीवितव्यवत् । क्रन्दन्ति डिम्भरूपाणि, गत्वा पितरमूचिरे ॥ ११ ॥
व्यात्ताननानामस्माकं, दस्युवृन्देन पायसम् । जह्रे प्रसारितदृशा-मनिलेनेव कज्जलम् ॥ १२ ॥
तदाकर्ण्य वचो विप्रः, क्षिप्रं दीप्रः क्रुदग्निना । यमदूत इवादाय, परिघं पर्यधावत ॥ १३ ॥
सरोषराक्षसावेशा-त्समुत्पादितदोर्बलः । हन्तुं प्रववृते दस्यून्, परिघेण पशूनिव ॥ १४ ॥
तेनावकरवत्साक्षा-त्क्षिप्यमाणानवेक्ष्य तान् । वित्रस्यतस्तिरस्कुर्व्वन्, दधावे तस्करेश्वरः ॥ १५ ॥
तस्यापि धावतो दैवा-द्गतिविघ्नविधायिनी । निरोद्धुं दुर्गतिमिव, मार्गे गौरन्तरेऽभवत् ॥ १६ ॥
करालकरवालैक-प्रहारेण वराकिकाम् । जघान नृजघन्यस्तां, चण्डाल इव निर्घृणः ॥ १७ ॥
तस्याभ्यापततो रोरद्विजातेः स शिरो भुवि । पनसद्रोः फलमिवा-पातयत्खड्गयष्टिना ॥ १८ ॥
आः पाप निष्कृप कृतं, किमेतदिति वादिनी । वाला मासवती तं चा-भ्यगात् द्विजकुटुम्बिनी ॥ १९॥
तस्या वृक इव च्छाग्या, गुर्विण्याः सोऽतिदारुणः । कुष्माण्डदारमुदरं, दारयित्वा द्विधाकरोत् ॥ २० ॥

ततो जरायुमध्यस्थं, तस्या गर्भं द्विधाकृतम् । स स्फुरन्तं निरैक्षिष्ट, लताया इव पल्लवम् ॥ २१ ॥
तथा सम्पश्यमानस्य, तस्य विह्वलचेतसः । कृपा गतकृपस्यापि, जज्ञे वल्कमिवाश्मनः ॥ २२ ॥
ततो हा तात तातेति, हा मातर्मातरित्यपि । विलपन्तः समाजग्मु–स्तत्कालं द्विजबालकाः ॥ २३ ॥
नग्नान् शुग्नानतिक्षामान्, श्यामानतिमलेन च । दृष्ट्वा दृढप्रहारी तान्, सानुतापमचिन्तयत् ॥ २४ ॥
हहा हता निर्घृणेन, दरिद्रौ दम्पती मया । अमी बाला हतास्तोय–शोषे जीवन्ति किं झषाः ॥ २५ ॥
क्रूरेण कर्म्मणानेन, नेष्यमाणस्य दुर्गतिम् । अघभीतस्य मे कः स्यादुपायः शरणं च कः ॥ २६ ॥
इति सञ्चिन्तयन्नेव वैराग्यावेगभागसौ । एनोगदागदङ्कारान्साधूनुद्यान ऐक्षत ॥ २७ ॥
नत्वोवाचेत्यहं पाप्मा, भाष्यमाणोऽपि पाप्मने । पङ्किलः स्पृश्यमानोऽपि, पङ्किलीकुरुते परम् ॥ २८ ॥
येषामेकतरमपि, नरकायैव तान्यहम् । ब्रह्मस्त्रीभ्रूणगोघात–पातकान्यकृपो व्यधात् (म्) ॥ २९ ॥
मामीदृशमपि त्रातुं, साधवो यूयमर्हथ । मेघानां वर्षतां स्थान–मस्थानं वा न किञ्चन ॥ ३० ॥
अथ ते साधवस्तस्मै, यतिधर्ममुपादिशन् । सोऽथ च्छत्रमिवोष्णालुः, पापभीरुस्तमाददे ॥ ३१ ॥
न भोक्ष्ये तत्र यत्राह्नि स्मरिष्याम्यस्य पाप्मनः । करिष्ये सर्वथा क्षान्तिं, सोऽग्रहीदित्यभिग्रहौ ॥ ३२ ॥
पूर्वावस्कन्दिते तस्मि–न्नेव ग्रामे कुशस्थले । कर्मक्षयं चिकीर्षुः स, विजहार महामनाः ॥ ३३ ॥
स एवायं कृतच्छद्मा, पापः पापीयसामहो । इत्यतर्ज्यत लोकेन, स महात्मा दिवानिशम् ॥ ३४ ॥
गोभ्रूणद्विजघात्येष, इति लोकेन जल्पता । विशन् गृहेषु भिक्षार्थं, श्वेव लोष्टैरकुट्यत ॥ ३५ ॥

कथा।

स्मार्यमाणः स तत्पापं, प्रतिवासरमप्यसौ । शान्तस्वान्तो न भुङ्क्ते स्म, किंवा सत्त्वस्य दुष्करम् ॥ ३६ ।
क्वचित्प्रातः क्वचिन्मध्यंदिने सायमपि क्वचित् । स्मार्यमाणः स तत्पापं, कुत्राप्यह्वि न भुक्तवान् ॥ ३७ ॥
लोष्टुभिर्यष्टिभिः पांशु-वृष्टिभिर्मुष्टिभिर्जनाः । यज्जघ्नुः सोऽधिसेहे तत्सम्यक् चैवमभावयत् ॥ ३८ ॥
आत्मन् यादृक्कृतं कर्म्म, तादृशं फलमाप्नुहि । यादृक्षमुप्यते वीजं, फलं तादृक्षमाप्यते ॥ ३९ ॥
यदमी निरनुक्रोश-माक्रोशान्मयि तन्वते । अयत्नेनैव सिद्धा, तन्ममेयं कर्म्मनिर्ज्जरा ॥ ४० ॥
मय्याक्रोशाः प्रमोदाय, यथैषां मे तथैव हि । यत्प्रीत्या सहमानस्य, कर्म्मक्षयविधायिनः ॥ ४१ ॥
यन्मां भर्त्सयतामेषां, सुखमुत्पद्यतेऽद्य तत् । उत्पद्यतां भवे हन्त, दुर्लभः सुखसङ्गमः ॥ ४२ ॥
अमी मदीयं दुष्कर्म्म-ग्रन्थिं परुषभाषितैः । क्षारैरिव चिकित्सन्तो, नितान्तं सुहृदो मम ॥ ४३ ॥
कुर्व्वन्तु ताडनं हन्त, ममैते यदिदं किल । स्वर्णस्येवाग्निसन्तापो, मलिनत्वमपोहति ॥ ४४ ॥
कर्षन् दुर्गतिगुप्तेर्मां, स्वं प्रक्षिपति तत्र यः । कथं कुप्याम्यहं तस्मै, प्रहारानपि कुर्वते ॥ ४५ ॥
मत्पापानि व्यपोहन्ति, निजपुण्यव्ययेन ये । कथङ्कारमिवैतेभ्योऽपरः परमबान्धवः ॥ ४६ ॥
वधबन्धादि हर्षाय, यन्मे संसारमोचनम् । तदेवानन्तसंसारहेतु-रेषां दुनोति माम् ॥ ४७ ॥
केचित्परेषां तोषाय, त्यजन्त्यर्थान्वपूंष्यपि । एषां प्रीतिदमाक्रोश-हननादि कियन् मम ॥ ४८ ॥
तर्जितोऽहं हतो नाऽस्मि, हतो वा नाऽस्मि मारितः । मारितो वा न मे धर्मोऽपहृतो बान्धवैरिव ॥ ४९ ॥
आक्रोशवागधिक्षेपो, बन्धनं हननं मृतिः । सह्यं श्रेयोऽर्थिना सर्वं, श्रेयो हि बहुविघ्नकम् ॥ ५० ॥

एवं भावयता तेन, गर्हता स्वं च दुष्कृतम् । निर्दग्धः सर्वतः कर्म्म-राशिः कक्ष इवाग्निना ॥ ५१ ॥
अम्लानं केवलज्ञान-मथ लेभे सुदुर्लभम् । अयोगिकेवलिगुण-स्थानस्थो मोक्षमाप च ॥ ५२॥
योगप्रभावेण दृढप्रहारी, यथैष मुक्त्वा नरकातिथित्वम् । पदं प्रपेदे परमं तथान्योऽप्यसंशयानः प्रयतेत योगे ॥५३॥

इतिश्री मुद्रित-योगशास्त्रवृत्तित उद्धृता

## दृढप्रहारीकथा सम्पूर्णा.

## ३४ सत्यव्रतत्राणोपरि कालिकाचार्यकथा.

अस्ति भूरमणीमौलिमणिस्तुरमणी पुरी । यथार्थनामा तत्रासीज्जितशत्रुर्महीपतिः ॥ १ ॥
रुद्रेति नामधेयेन, ब्राह्मणी तत्र विश्रुता । दत्त इत्यभिधानेन, तस्याः पुत्रो बभूव च ॥ २ ॥
दत्तो नितान्तदुर्दान्तो, द्यूतमद्यप्रियः सदा । सेवितुं तं महीपालं, प्रवृत्तो वर्त्तनेच्छया ॥ ३ ॥
राज्ञा प्रधानीचक्रेऽसौ, छायावत्पारिपार्श्वकः । आरोहायोपसर्पन्त्या, विषवल्लेरपि द्रुमः ॥ ४ ॥
विभेद्य प्रकृतीरेष, राजानं निरवासयत् । पापात्मानः कपोताश्च, स्वाश्रयोच्छेददायिनः ॥ ५ ॥
तस्य राज्ञो दुरात्माऽसौ, राज्ये स्वयमुपाविशत् । क्षुद्रः पादान्तदानेऽपि, क्रामत्युच्छीर्षकावधि ॥ ६ ॥
पशुहिंसोत्कटान् यज्ञान-ज्ञो धर्मधिया व्यधात् । धूमैर्मलिनयन् विश्वं, स मूर्त्तैरिव पातकैः ॥ ७ ॥

विहरन् कालिकार्याख्य--श्राचार्यस्तस्य मातुलः । तत्राजगाम भगवान--इवानिव संयमः ॥ ८ ॥
तत्समीपमनापित्तु--र्दत्तो मिथ्यात्वमोहितः । अत्यर्थं प्रार्थितो मात्रा, मातुलाभ्यर्णमाययौ ॥ ९ ॥
मत्तोन्मत्तप्रमत्ताभो दत्तोऽपृच्छत्तमुद्भटम् । आचार्य यदि जानासि, यज्ञानां ब्रूहि किं फलम् ॥ १० ॥
उवाच कालिकाचार्यो, धर्मं पृच्छसि तच्छृणु । तत्परस्य न कर्त्तव्यं, यद्यद्विप्रियमात्मनः ॥ ११ ॥
ननु यज्ञफलं पृच्छामी--ति दत्तोदिते पुनः । सूरिरूचे न हिंसादि, श्रेयसे किन्तु पाप्मने ॥ १२ ॥
पुनस्तदेव साक्षेपं, पृष्टो दत्तेन दुर्धिया । ससौष्ठवमुवाचार्यो, यज्ञानां नरकः फलम् ॥ १३ ॥
दत्तः क्रुद्धोऽभ्यधादेव--मिह कः प्रत्ययो वद । आर्योऽप्युचे श्वकुम्भ्यां, त्वं पक्ष्यसे सप्तमेऽहनि ॥ १४ ॥
दत्तः कोपादुदस्तभ्रू--रुणीकृतलोचनः । भूताविष्ट इवोवाच, प्रत्ययोऽत्रापि को ननु ? ॥ १५ ॥
अथोचे कालिकार्योऽपि, श्वकुम्भीपचनात्पुरः । तस्मिन्नेवाह्न्यकस्मात्ते, मुखे विष्ठा प्रवेक्ष्यति ॥ १६ ॥
रोषाद् दत्तो जगादेदं, तव मृत्युः कुतः कदा । न कुतोऽपि स्वकाले द्यां, यास्यामीत्यवदन्मुनिः ॥ १७ ॥
अमुं निरुन्द्ध दुर्बुद्धि--मिति दत्तेन रोषतः । आदिष्टैः कालिकाचार्यो, रुरुधे दण्डपूरुषैः ॥ १८ ॥
अथ दत्तात् समुद्विग्नाः, सामन्ताः पापकर्मणः । आह्वनार्थं नृपं तस्मै, दत्तमर्पयितुं किल ॥ १९ ॥
दत्तोऽपि शङ्कितस्तस्थौ, निलीनो निजवेश्मनि । कण्ठीरवरवत्रस्तो, निकुञ्ज इव कुञ्जरः ॥ २० ॥
स विस्मृतदिनो दैवा--दागते सप्तमे दिने । बहिर्निर्गन्तुमारक्षै--राजमार्गानरक्षयत् ॥ २१ ॥
तत्रैको मालिकः प्रात--र्विशन् पुष्पकरण्डवान् । चक्रे वेगातुरो विष्ठां, भीतः पुष्पैः प्यधत्त च ॥ २२ ॥

इहाहनि हनिष्यामि, पशुवन्मुनिपांसनम् । चिन्तयन्निति दत्तोऽपि, निर्ययौ सादिभिर्वृतः ॥ २३ ॥
एकेन वल्गताऽश्वेन, विष्ठोत्क्षिप्ता खुरेण सा । दत्तस्य प्राविशच्चास्ये, नासत्या यमिनां गिरः ॥ २४ ॥
शिलास्फालितवत्सद्यः, श्लथाङ्गो विमनास्ततः । स सामन्ताननापृच्छ्य, ववले स्वगृहं प्रति ॥ २५ ॥
नाऽस्मन्मन्त्रोऽमुना ज्ञात, इति प्रकृतिपूरुषैः । गृहमप्रविशन्नेव, बद्ध्वा दध्रे स गौरिव ॥ २६ ॥
अथ प्रकाशयंस्तेजो, निजं राजा चिरन्तनः । प्रादुरासीत्तदानीं स, निशात्यय इवार्यमा ॥ २७ ॥
सोऽहिः करण्डनिर्यात, इव दूरं ज्वलन् क्रुधा । दत्तं श्वकुम्भ्यां नरककुम्भ्यामिव तदाऽक्षिपत् ॥ २८ ॥
अधस्तात्ताप्यमानायां, कुम्भ्यां श्वानोऽन्तरा स्थिताः । दत्तं विदद्रुः परमाधार्मिका इव नारकम् ॥ २९ ॥
निरस्तभूपालभयोपरोधः श्रीकालिकाचार्य इवैवमुच्चैः । सत्यव्रतत्राणकृतप्रतिज्ञो न जातु भाषेत मृषा मनीषी ॥ ३० ॥

इति श्रीमुद्रित–योगशास्त्रवृत्तित उद्धृता

## कालिकाचार्यकथा सम्पूर्णा.

## ३५ सुविनेयानां मोक्षदायित्वे चण्डरुद्राचार्यकथा.

उज्जयिन्यां पुरि स्नात्रो–द्याने नंदनसन्निभे । चंडरुद्राभिधः सूरिः, सगच्छः समवासरत् ॥ १ ॥
ऊनाधिकक्रियादोषान्, स्वगच्छीयतपस्विनाम् । दर्शं दर्शं स चाकुप्यत्, प्रकृत्याप्यतिरोषणः ॥ २ ॥

भूयसां वारणं ह्येषां, मयैकेनातिदुष्करम् । परं रोपातिरेकान्मे, स्वहितं न हि जायते ॥ ३ ॥
ध्यात्वेति सूरिरेकांते, तस्थौ सद्ध्यानहेतवे । तस्मिं विहाय शिष्याणां, स्वाध्यायध्यानतत्परः ॥ ४ ॥ युग्मम्
इतश्चोज्जयिनीवासी, व्यवहारिसुतो युवा ॥ आगात्कुंकुमलिप्तांगो, नवोढस्तत्र मित्रयुक् ॥ ५ ॥
साधून् दृष्ट्वा परीहास—पूर्वकं तान् प्रणम्य च । सोऽवादीद्भगवंतो मे, धर्मं ब्रूत सुखाकरम् ॥ ६ ॥
वैहासिकोऽयमिति ते, ज्ञात्वा नो किंचिदूचिरे । ततो भूयः स निर्ग्रंथान् , सोपहासमभाषत ॥ ७ ॥
दौर्भाग्याद्भार्यया त्यक्तो, विरक्तोऽहं गृहाश्रमात् । तत् प्रसद्य भवांभोधि–तारकं दत्त मे व्रतम् ॥ ८ ॥
धूर्त्तः प्रतारयत्यस्मा—न्नर्मवाक्यैर्मुहुर्मुहुः । तद्धृष्यतामसौ सम्यक्, चिंतयित्वेति ते जगुः ॥ ९ ॥
गुरोरधीना न वयं, स्वयं दीक्षादि दद्महे । तदाश्रय व्रताय त्व–मस्मद्गुरुमितः स्थितम् ॥ १० ॥
श्रुत्वेति सवयस्योऽथ, सोऽव्रजत्सूरिसन्निधौ । अब्रवीत्तं च वंदित्वा, सोपहासं कृताञ्जलिः ॥ ११ ॥
गृहव्यापारतो भग्नो, लग्नोऽस्मि त्वत्पदाब्जयोः । तत्प्रवाजय मां स्वामि–स्तिष्ठामि ससुखं यथा ॥ १२ ॥
सहास्यामिति तद्वाचं, श्रुत्वा कोपातिरेकतः । सूरिर्जगौ व्रतेच्छुश्चे—त्तदा भस्मानय द्रुतम् ॥ १३ ॥
ततस्तत्सुहृदैकेना—नीते भस्मनि साधुराट् । तं गृहीत्वा स्वबाहुभ्यां, लोचं कृत्वा ददौ व्रतम् ॥ १४ ॥
तद्विलोक्य विषण्णास्त–द्वयस्यास्तमथाभ्यधुः । मित्र ! सद्यः पलायस्व, धाम यामो वयं यथा ॥ १५ ॥
आसन्नसिद्धिकः सोऽथ, लघुकर्मेत्यचिंतयत् । कथं गच्छाम्यहं गेहं, स्ववाचा स्वीकृतव्रतः ॥ १६ ॥
प्रमादसंगतेनापि, या वाक् प्रोक्ता मनस्विना । सा कथं दृषदुत्कीर्णा–क्षरालीवाऽन्यथा भवेत् ॥ १७ ॥

नर्मणापि मया लब्धं, रक्षणीयं ततो व्रतम् । जहाति द्युमणिं को हि, विनायासमुपस्थितम् ॥ १८ ॥
ध्यात्वेति भावसाधुत्वं, स सुधीः प्रत्यपद्यत । यथास्थानं ततो जग्मु-स्तद्वयस्या विषादिनः ॥ १९ ॥
विनेयोऽथावदत्सूरिं, भगवन् ! बंधवो मम । श्रामण्यं मोचयिष्यंति, तद्यामोऽन्यत्र कुत्रचित् ॥ २० ॥
गच्छो महानसौ गच्छन्, प्रच्छन्नमपि यज्जनैः । ज्ञायते तद् द्वयोरेवा-ऽऽवयोर्गमनमर्हति ॥ २१ ॥
सूरिः प्रोवाच यद्येवं, तदाऽध्वानं विलोकय । यथा रजन्यां गच्छामः, सोऽप्यालोक्य तमाययौ ॥ २२ ॥
प्रतस्थेऽथ निशीथिन्यां, सूरिर्नूतनशिष्ययुक् । पुरो याहीति गुरुणा, चोक्तः शिष्यो ययौ पुरः ॥ २३ ॥
अपश्यन्निशि वृद्धत्वात्, स्थाणुना स्खलितो गुरुः । वेदनाविह्वलो जज्ञे, ज्वलद्रोषभराकुलः ॥ २४ ॥
हा दुष्टशिष्य ! सन्मार्गो, न व्यलोकीति विब्रुवन् ! दण्डेन शिष्यं शिरसि, कृतलोचे जघान सः ॥ २५ ॥
तत्प्रहारस्फुटन्मौलि-र्निर्गच्छद्रुधिरोऽपि सः । न व्यब्रवीन्नाप्यकुप्यत्, प्रत्युतैवमचिंतयत् ॥ २६ ॥
स्वगच्छमध्ये ससुखं, तिष्ठंतोऽमी महाशयाः । अधन्येन मया दुःख-भाजनं विहिता हहा ! ॥ २७ ॥
आजन्मसौख्यदाः शिष्या, गुरोः स्युः केऽपि धीधनाः । आद्य एव दिनेऽहं तु, जातोऽसातकरो गुरोः ॥ २८ ॥
स्थाण्वादिना गुरोः पीडा, माभूद्भूयोऽपि भूयसी । ध्यायन्निति प्रयत्नेन, स चचाल शनैः शनैः ॥ २९ ॥
तस्यैवं व्रजतः शुद्धा-शयस्य समतानिधेः । महात्मनः समुत्पेदे, निशायामेव केवलम् ॥ ३० ॥
अथ प्रभाते संजाते-ऽभ्युदिते च दिवाकरे । सूरिणा ददृशे शिष्यो, रुधिरालिप्तमस्तकः ॥ ३१ ॥
ततः शांतरसाचांत-स्वांतः सूरिरचिंतयत् । अहो ! नवीनशिष्यस्या-ऽप्यमुष्य क्षांतिरुत्तमा ॥३२॥

क्रोधाध्मातेन मयका, दंडेनैवं हतोऽपि यत्। नातनोद्वाङ्मनोदेहै–र्वैगुण्यं किंचिदप्यसौ ॥ ३३ ॥
चिरप्रव्रजितस्यापि, रोषदोषांश्च जानतः। प्राप्ताचार्यपदस्यापि, धिग्मे प्रबलकोपताम्! ॥ ३४ ॥
इयच्चिरं सुदुष्पालं, पालितं मयकाव्रतम्। परं तन्निष्फलं जज्ञे, कोपात्तन्मेऽमुना कृतम् ॥ ३५ ॥
भावनाभिरिति भावितचित्तः, सोऽपि केवलमवाप मुनींद्रः।
एवमुत्कटरुषोऽपि गुरोः स्यु–र्मोक्षदाः सविनयाः सुविनेयाः ॥ ३६ ॥

इति श्रीमुद्रित–उत्तराध्ययनसूत्रवृत्तित उद्धृता

## चण्डरुद्राचार्यकथा संपूर्णा.

## ३६ क्षुधापरीषहे हस्तिमित्रकथा

अस्त्यत्र भरते स्वर्ग–जयिन्युज्जयिनी पुरी। हस्तिमित्राभिधः श्रेष्ठी, तत्राभूद्भूरिभूतिमान् ॥ १ ॥
सौभाग्यसेवधिर्दक्षाव––धिस्तस्य च वल्लभा। अकाण्ड एवाम्रियत, स्वप्राणेभ्योऽपि वल्लभा ॥ २ ॥
संसारासारतां ध्यायं–स्ततो वैराग्यवानसौ। प्राव्राजीत् हस्तिभूत्याह्व–पुत्रयुक् साधुसन्निधौ ॥ ३ ॥
अन्यदा तावुज्जयिन्याः, प्रस्थितौ सह साधुभिः। प्रति भोजकटं यान्ता–वरण्यानीमवापतुः ॥ ४ ॥
हस्तिमित्रमुनेस्तत्र, मर्माभित्कण्टको महान्। भग्नः पादतले तेन, पुरो गन्तुं स नाशकत् ॥ ५ ॥
ततः स तद्व्यथापूरैः, प्रापितः प्राणसंशयम्। स्वसन्निधिस्थितान् साधू–नभ्यधादिति धीनिधिः ॥६ ॥

यूयं व्रजत कान्तार-पारञ्च प्राप्नुत द्रुतम् । अहं त्विहैवानशनं, करिष्ये गन्तुमक्षमः ॥ ७ ॥
तच्छ्रुत्वा मुनयः प्रोचु-र्हस्तिमित्र ! विषीद मा । त्वां सहोत्पाट्य नेष्यामो, मोक्ष्यामो न पुनर्वने ॥ ८ ॥
धर्मकृत्येषु सारं हि, वैयावृत्यं जगुर्जिनाः । तत्पुनर्ग्लानसम्बन्धि, विना पुण्यं न लभ्यते ॥ ९ ॥
वैयावृत्यं तदेतत्ते, करिष्यामो वयं मुदा । तदाकर्ण्य जगौ हस्ति-मित्रर्षिः सत्त्वसेवधिः ॥ १० ॥
सत्यमेतत्परमहं, प्राप्तकालोऽस्मि साम्प्रतम् । तन्मामुत्पाट्य मा यूयं, मुधा बाधामवाप्स्यथ ! ॥ ११ ॥
किञ्चात्र श्वापदाकीर्णे, प्रचुरोपद्रवे वने । सर्वेषां त्यक्तसार्थानां, न स्थातुमुचितं चिरम् ॥ १२ ॥
इत्युक्त्वाऽनशनं कृत्वा, क्षमयित्वा च संयतान् । स सद्यः प्रेषयामास, सह सार्थेन साग्रहम् ॥ १३ ॥
स्थातुकाममपि स्नेहा-त्सहादायाथ तत्सुतम् । प्रस्थिता मुनयो हस्ति-मित्रस्त्वस्थाद्गुहान्तरे ॥ १४ ॥
दूरं गत्वापि तत्पुत्रो, वञ्चयित्वा मुनीनगात् । पितुः समीपं स्नेहो हि, निर्मन्त्राकर्षणं मतम् ॥ १५ ॥
ततस्तातोऽवदत्पुत्र !, न शोभनमदः कृतम् । मुनीन् विमुच्य मत्पार्श्व-मविमृश्य यदागमः ॥ १६ ॥
प्रासुकान्नोदकादीनां, दाता नास्तीह कोऽपि यत् । क्षुत्तृषाविवशस्तस्मा-त्त्वमप्यत्र विपत्स्यसे ! ॥ १७ ॥
ततः पुत्रोऽवदत्तात !, यद्भाव्यं तद्भवत्विह । परमस्यामवस्थायां, मुक्त्वा वो न व्रजाम्यहम् ! ॥ १८ ॥
हस्तिमित्रोऽथ तत्रैव, दिवसे वेदनाकुलः । स्मृतपञ्चनमस्कारो, विपद्याजनि निर्जरः ॥ १९ ॥
विपन्नमपि जीवन्तं, सुतो मोहाद्विवेद तम् । प्रयुक्तावधिरज्ञासी-त्सुरोऽपि प्राग्भवं निजम् ॥ २० ॥
अद्राक्षीच्च वपुः स्वीयं, तत्रस्थं तनयञ्च तम् । ततस्तत्कृपया स्वाङ्गं, प्रविश्येति सुरोऽब्रवीत् ॥ २१ ॥

भिक्षायै वत्स ! गच्छ त्वं, सोऽवादीत् क्व व्रजाम्यहम् । उवाच निर्जरो याहि, भूरुहेषु वटादिषु ॥ २२ ॥
तद्वासिनो जनास्तुभ्यं, प्रदास्यन्त्यशनादिकम् । तत्प्रपद्य ययौ सोऽपि, क्षुधात्मा भूरुहामधः ॥ २३ ॥
धर्मलाभ इति प्रोच्चैः, प्रोच्य तत्राथ तस्थुषे । तस्मै भिक्षामदाद्वृक्षा—न्निर्गत्यालङ्कृतः करः ॥ २४ ॥
इत्थं भिक्षां ददौ तस्मै, हस्तिमित्रामरोऽन्वहम् । कृताहारश्च तं स्नेहा—द्वार्त्तयामास सर्वदा ॥ २५ ॥
देशे भोजकटस्याथ, जज्ञे दुर्भिक्षमुल्बणम् । ततस्तत्राभवद्भिक्षा, भिक्षूणामतिदुर्लभा ॥ २६ ॥
व्रतिनस्ते ततो वर्षे, द्वितीये प्रति मालवम् । वलिताः पूर्वदृष्टेन, चेलुस्तेनैव वर्त्मना ॥ २७ ॥
अटव्यां चाययुस्तस्यां, क्षुल्लकं ददृशुश्च तम् । क्व तिष्ठसि ? कथं भुङ्क्षे ?, पप्रच्छुरिति तञ्च ते ॥ २८ ॥
आवादीत्सोऽथ तिष्ठामि, सर्वदा पितुरन्तिके । वृक्षनिर्गतहस्ताच्च, लभेऽहमशनादिकम् ॥ २९ ॥
अद्य यावद्विनाऽऽहारं, वृद्धः किं जीवतीति ते । तं वीक्षितुं गताः शुष्क—मद्राक्षुस्तत्कलेवरम् ॥ ३० ॥
ततस्ते व्यमृशन्नूनं, हस्तिमित्रोऽभवत्सुरः । कृपयाऽन्नादिदानेन, तेनैवायमरक्ष्यत ॥ ३१ ॥
अत्राहुः केऽपि बालेन, न सोढः क्षुत्परीषहः । वृद्धेन स पुनः सोढो, धैर्याधरीतभूभृता ॥ ३२ ॥
अन्ये त्वाहुः सुतेनापि, सोढ एव परीषहः । यन्नासौ प्रासुकालाभे—ऽप्यैच्छद्द्रोक्तुं फलादिकम् ॥ ३३ ॥
हस्तिभूतिरपि ज्ञात्वा—ऽऽहारलाभं सुधाशनात् । आलोचितः प्रतिक्रान्तो, विजहार सहर्षिभिः ॥ ३४ ॥
परीषहो दुर्विषहो यथाऽऽभ्यां, सेहे बुभुक्षाविषयो मुनिभ्याम् ।

ऐदंयुगीनैरपि पुण्यपीनैः, सह्यस्तथाऽसौ मनसाप्यदीनैः ॥ ३५ ॥

इति श्रीमुद्रित–उत्तराध्ययनवृत्तितः उद्धृता

## हस्तिमित्रकथा संपूर्णा.

## ३७ तृट्परिषहे धर्मशर्ममुनिकथा

अभूदुज्जयिनीपुर्य्यां, धनमित्राभिधो वणिक् । धनशर्माश्रयस्तस्य, धनशर्मा सुतोऽभवत् ॥ १ ॥
गुरुवाणीं समाकर्ण्य, गुरुवैराग्यवान् धनः । पुत्रेण पुण्यसत्रेण, सत्रा तत्राऽऽददे व्रतम् ॥ २ ॥
स्वस्मिन् परे च सहितौ, सहितौ तौ व्रतिव्रजैः । प्रस्थितावेलगपुराऽध्वनि मध्यान्दिनेऽन्यदा ॥ ३ ॥
तदा च भीष्मग्रीष्मार्क—करसम्पातातापितः । पिपासापीडितो बालः, स चचाल शनैः शनैः ॥ ४ ॥
मुनयोऽन्येऽग्रतो जग्मु—र्धनमित्रमुनिः पुनः । पश्चाच्चचाल सूनोस्तत्—प्रेमपाशनियन्त्रितः ॥ ५ ॥
मार्गे तत्रापयौ रंग–त्तरङ्गाथ तरङ्गिणी । ततः पिताऽलपत्पुत्रं, तां निरीक्ष्य प्रमोदभाक् ॥ ६ ॥
जानामि चेष्टया वत्स !, त्वां पिपासापराजितम् । मदभ्यर्णे च नास्त्यम्भः, प्रासुकं तत्करोमि किम् ? ॥ ७ ॥
तदिदानीं नदीनीरं, पीत्वोदन्या निहन्यताम् । निषिद्धमपि कार्यं हि, कार्यमापदि धीघनैः ॥ ८ ॥
यदुक्तं—'निषिद्धमप्याचरणीयमापदि, क्रिया सती नाऽवति यत्र सर्वथा ।

घनाम्बुना राजपथेऽतिपिच्छिले, क्वचिद्बुधैरप्यपथेन गम्यते ॥ ९ ॥"
मृत्युदामापदमिमां, तदुल्लङ्घ्य कथञ्चन । पश्चादालोचयेः पापं, समीपे सद्गुरोरिदम् ॥ १० ॥
इत्युदीर्य समुत्तीर्य, स नदीमित्यचिन्तयत् । नूनं मद्दर्शने पुत्रो, ह्रिया पास्यति नोदकम् ॥ ११ ॥
ह्रीमान् कुर्वन्नकार्यं हि, स्वच्छायातोऽपि शङ्कते । तद्दर्शनपथादस्या—पसरामि शनैः शनैः ॥ १२ ॥
ध्यात्वेति स पुरोऽचालीत्, क्षुल्लोऽथ प्राप निम्नगाम् । तृषार्त्तोऽपि न तत्तोय—मपिबच्च दृढव्रतः ॥ १३ ॥
अन्ये त्वाहुरुदन्या‚नि—बाधितः स शिशुर्भृशम् । शुष्यत्तालुमुखोरस्क—श्चेतसीति व्यचिन्तयत् ॥ १४ ॥
पिबाम्यऽनादेयमपि, नादेयं वारि साम्प्रतम् । प्रायश्चित्तं ग्रहीष्यामि, पश्चात्सद्गुरुसन्निधौ ॥ १५ ॥
विमृश्येति समुत्पाट्य, पातुमञ्जलिना जलम् । निन्ये यावन्मुखस्याग्रे, सोऽध्यासीदिति तावता ॥ १६ ॥
पिबामीमान् कथं जीवा—नहं विज्ञातजैनगीः । उदबिन्दौ यदेकत्रा—ऽसङ्ख्यजन्तून् जिना जगुः ॥ १७ ॥
त्रसाः पूतरमत्स्याद्याः, स्थावराः पनकादयः । नीरे स्युरिति तद्घाती, सर्वेषां हिंसको भवेत् ॥ १८ ॥
तत्कियद्भिर्दिनैर्यान्ति, रक्षिता अपि ये ध्रुवम् । तान् प्राणान् रक्षितुं दक्षः, परप्राणान्निहन्ति कः ॥ १९ ॥
सजीवं जीवनमिदं, तन्न पास्यामि सर्वथा । निर्णीयेति शनैर्नद्यां, स मुमोचाञ्जलेर्जलम् ॥ २० ॥
बालोऽप्यबालधैर्यस्ता--मुत्तीर्य तटिनीं ततः । तत्तीर एव सोऽपत--त्तृष्णया गन्तुमक्षमः ॥ २१ ॥
धर्मस्थैर्यं दधच्चित्ते, पिपासाविवशोऽपि सः । स्मृतपञ्चनमस्कारो, विपद्य त्रिदिवं ययौ ॥ २२ ॥
प्रयुज्याथावधिज्ञानं, ज्ञात्वा पूर्वभवं निजम् । पुरो गत्वा स्थितं तातं, प्रेक्ष्य स्वाङ्गं प्रविश्य च ॥ २३ ॥

अन्वगाद्धनमित्रर्षिं, ततश्छलयितुं सुरः। समायान्तं सुतं दृष्ट्वा, हृष्टः सोऽप्यचलत्पुरः ॥ २४ ॥ [युग्मम्]
अथोदन्या व्यथार्त्तानां, मुनीनामनुकम्पया। धनशर्माऽमरो भूरि-गोकुलान्यध्वनि व्यधात् ॥ २५ ॥
तेभ्योऽधिगत्य तक्रादि, साधवः स्वास्थ्यमासदन्। सुधाकुण्डेभ्य आसाद्य, पीयूषमिव निर्जराः ॥ २६ ॥
विहरन्तः सुखेनैवं, तत्कृते व्रजिकाव्रजे। उल्लङ्घ्यारण्यमापुस्ते, क्रमादन्तिमगोकुलम् ॥ २७ ॥
ततोऽग्रे गच्छतां तेषां, मध्यात्कस्यापि विण्टिकाम्। स्वं जिज्ञापयिषुः सोऽथ, तत्र व्यस्मरयत्सुरः ॥ २८ ॥
दूरं गत्वा विण्टिकां च, स्मृत्वा स वलितो व्रती। उपधेर्विण्टिकां तत्रा-ऽपश्यत्स्वां न तु गोकुलम् ॥ २९ ॥
तामादाय प्रचलितो, मिलितोऽन्यतपोधनैः। अवदद्विण्टिकालाभं, गोकुलादर्शनं च सः ॥ ३० ॥
जाताश्चर्यास्तदाकर्ण्य, मुनयो व्यमृशन्निति। नूनं दिव्यानुभावेन, गोकुलान्यभवन् वने ॥ ३१ ॥
अत्राऽन्तरे प्रादुरासीत्, स सुरः कान्तिभासुरः। विहाय पितरं सर्वान्, मुनीनऽन्यान्ननाम च ॥ ३२ ॥
एनं कुतो न नमसी-त्युक्तः स व्रतिभिस्ततः। स्वीयं व्यतिकरं सर्वं, निवेद्येत्यवदत्सुरः ॥ ३३ ॥
सजीवाऽम्भोऽपि पातुं य-त्तदासौ मे मतिं ददौ। तत्पूर्वभववप्ताऽपि, साधुरेष न वन्द्यते ॥ ३४ ॥
स्नेहादपि रिपोरेव, कार्यं विहितवानसौ। यद्दुर्गतिनिमित्तं मे, तदा तदुपदिष्टवान् ॥ ३५ ॥
अपास्यं चेत्सचित्ताम्बु, तदैतद्वचनादहम्। व्रतभङ्गभवात्पापा-दभ्रमिष्यं तदा भवे ॥३६ ॥
स एव हि पूज्यो, गुरुश्च जनकोऽपि च। शिष्यं सुतं च यः क्वापि, नैवोन्मार्गे प्रवर्त्तयेत् ॥ ३७ ॥
धनशर्मसुपर्वैव—मुदीर्यागात्त्रिविष्टपम्। साधवोऽपि ततः स्थाना—द्विजहुस्ते यथासुखम् ॥ ३८ ॥

क्षुल्लो यथाऽयं धनशर्मनामा, सेहे पिपासां सुदृढप्रतिज्ञः। एवं समग्रैरपि संयतैः सा, सह्या महानन्दपदानुरक्तैः ॥३९॥

इति श्रीमुद्रित–उत्तराध्ययनवृत्तितः उद्धृता

## धर्मशर्ममुनिकथा सम्पूर्णा.

## ३८ शीतपरिषहे साधुचतुष्ककथा.

पूरे राजगृहेऽभूवं—श्चत्वारश्चतुरोत्तमाः। सखायोऽन्योन्यमुत्कृष्ट—प्रेमभाजो वणिग्वराः ॥ १ ॥

भद्रबाहुस्वामिपार्श्वे, श्रुत्वा धर्मं जिनोदितम्। ते चत्वारोऽपि सञ्जात—संवेगाः प्राव्रजन् मुदा ॥ २ ॥

गुरुशुश्रूषणात्पार–दृश्वानस्ते श्रुतोदधेः। एकाकित्वविहाराख्यां, प्रतिमां प्रतिपेदिरे ॥ ३ ॥

कल्पश्चायमभूत्तेषां, यद्विहाराशनादिकम्। तृतीय एव प्रहरे, कार्यं कार्यं समाहितैः ॥ ४ ॥

तुर्ययामप्रवेशे तु, भवेद्यो यत्र संस्थितः। तेन तत्र प्रतिमया, स्थेयं प्रहरसप्तकम् ॥ ५ ॥

कल्पमेनं श्रयन्तस्ते, विहरन्तो धरातले। परेद्यवि पुरं राज—गृहं पुनरूपाययुः ॥ ६ ॥

तदा च तुहिनव्यूहैः, पीडयन् जगतिजनम्। पत्रपुष्पफलोपेतान् स्थाणून्, कुर्वन् महीरुहान् ॥ ७ ॥

तटाकान्यपि सर्वाणि, स्त्यानयन्नाज्यवन्निशि। निरास्पदान् पक्षिपशु–श्वापदान् दारुतां नयन् ॥ ८ ॥

शीतकम्प्रदरिद्राणां, दन्तवाद्यं प्रवादयन्। कृशानुसेविनं कुर्वन्, सर्वं श्रोत्रियवज्जनम् ॥ ९ ॥

रुष्टानपि मिथोऽत्यर्थं, दम्पतीन् परिरम्भयन्। हेमन्तर्तुः प्रववृते, विश्वं हेममयं सृजन् ॥१०॥ (चतुर्भिः कलापकम्)

हिमर्त्तौं तत्र वैभार–गिरेस्ते मुनयः पुरे । आहारार्थं समाजग्मुः, प्रहरेऽह्नस्तृतीयके ॥ ११ ॥
कृताहाराश्च ते सर्वे, गन्तुं वैभारभूधरम् । पृथग् पृथग् न्यवर्त्तन्त, पुरमध्यान्महर्षयः ॥ १२ ॥
वैभाराद्रिगुफाद्वारे, प्राप्तस्यैकस्य तेष्वथ । द्वितीयस्य पुरोद्याने, तृतीयस्य तदन्तिके ॥ १३ ॥
तुर्यस्य तु पुरोपान्ते, चतुर्थः प्रहरोऽभवत् । कायोत्सर्गं ततः कृत्वा, ते तत्रैवाचतस्थिरे ॥ १४ ॥ (युग्मम्)
तेष्वद्रिकन्दराद्वार–संस्थितस्य तपस्विनः । उच्चैः स्थित्वादलग–च्छीतमत्यन्तदारुणम् ॥ १५ ॥
पतत्तुहिनसम्पर्क–शीतलैः शैलमारुतैः । कायश्चकम्पे तस्योच्चै–र्न किञ्चिदपि मानसम् ॥ १६ ॥
स शीतवेदनां सम्यक्, सहमानो महामुनिः । यामिन्याः प्रथमे यामे, परलोकमसाधयत् ॥ १७ ॥
उद्यानस्थस्य नीचैस्त्वा–च्छीतमल्पं किमप्यभूत् । ततो रजन्याः प्रहरे, द्वितीये स व्यपद्यत ॥ १८ ॥
उद्यानपार्श्ववृत्तेस्तु, वृक्षाद्याश्रयतोऽलगत् । शीतमल्पं ततो यामे, स विपन्नस्तृतीयके ॥ १९ ॥
आसीदल्पतरं शीतं, तुर्यस्य नगरोष्मणा । ततः स प्रहरे तुर्ये, परासुत्वमगान्मुनिः ॥ २० ॥

चत्वारोऽपि प्राज्यधैर्या मुनीन्द्राः, स्वर्गं प्रापुस्ते विषह्येति शीतम् ।
इत्थं सर्वैः साधुभिस्त्यक्तकामै–स्तत्सोढव्यं मुक्तिसंयुक्तिकामैः ॥ २१ ॥

इति श्रीमुद्रित–उत्तराध्ययनवृत्तित उद्धृता

## साधुचतुष्ककथा सम्पूर्णा.

## ३९ उष्णपरीषहे अरहन्नकमुनिकथा.

अभूल्लक्ष्मीकुलागारं, नगरी तगरामिधा । दत्तप्रमोदस्तत्रासी--द्दत्तनामा वणिग्वरः ॥ १ ॥
स भद्राभार्यया साकं, भुञ्जानः सुखमुत्तमम् । अरहन्नकनामानं, पुत्ररत्नमजीजनत् ॥ २ ॥
धर्ममार्हतमाकर्ण्या--ऽर्हन्मित्राचार्यसन्निधौ । विरक्तो व्रतमादत्त, दत्तः पत्नीसुतान्वितः ॥ ३ ॥
दत्तोऽरहन्नकं स्नेहा--दिष्टैर्भोज्यैरपोषयत् । कदाचिदपि भिक्षार्थं, प्रेषयामास तं न तु ॥ ४ ॥
उत्तमर्ण इवानेन, किमयं पोष्यतेऽन्वहम् । समर्थोऽपि च किं भिक्षा--चर्यामेष न कार्यते ? ॥ ५ ॥
ध्यायन्तोऽपीति निर्ग्रन्था, वक्तुं किमपि नाशकन् । पुत्रं वा पालयन् वप्ता, निषेद्धुं केन शक्यते ? ॥ ६ ॥ युग्मम्
निदाघसमयेऽन्येद्यु--र्दत्तः साधुर्व्यपद्यत । तद्वियोगान्महादुःख--माससादाऽरहन्नकः ॥ ७ ॥
ततोऽन्ये संयतास्तात--विरहातुरचेतसे । तस्मै द्वित्रान् दिनान् याव--दानीयाहारमार्पयन् ॥ ८ ॥
अथ तं यतयोऽवोचन्, भिक्षार्थं पर्यट स्वयम् । नेदानीं पितृवत्कोऽपि, दास्यत्यानीय भोजनम् ॥ ९ ॥
दग्धोपरिष्टात् पिटको--पमां वाचं निशम्य ताम् । चचाल विमनाः सोऽथ, भिक्षायै मुनिभिः समम् ॥ १० ॥
अतीवसुकुमाराङ्गः, पूर्वमप्यकृतश्रमः । तदा निदाघतापेन, पर्यभूयत सोऽधिकम् ॥ ११ ॥
ग्रीष्मार्ककिरणोत्तप्त--रेणुकानिकरेण सः । अदह्यत पदोर्न्यधं, मौलौ च तपनांशुभिः ॥ १२ ॥
पश्चान्स्थितोऽन्यसाधुभ्य--स्तृषा शुष्यन्मुखाम्बुजः । महेभ्यसदनच्छायां, विश्रामाय स शिश्रिये ॥ १३ ॥

सौभाग्यमन्मथं तं च, तत्रस्थं तद्गृहेश्वरी । धनाढ्यवणिजो भार्या--ऽपश्यत्प्रोपितभर्तृका ॥ १४ ॥
अचिन्तयच्च सा रूप--महो ! अस्य मनोहरम् । यद्दृष्टमात्रमपि मे, समाकृपति मानसम् ॥ १५ ॥
तदमुं रमयित्वा स्वं, करोमि सफलं वयः । ध्यात्वेति प्राहिणोद् दासीं, सा तदाह्वानहेतवे ॥ १६ ॥
दास्याहूतः सोऽपि तस्याः, मनसीव गृहेऽविशत् । सापि हर्षभरोदञ्च--त्कुचकुम्भा तमभ्यगात् ॥ १७ ॥
पप्रच्छ च स्मितोन्मिश्र--दन्तांशुद्योतिताधरा । समग्रसुभगोत्तंस !, किं याचसि भवानिति ॥ १८ ॥
अथारहन्नकः स्माह, भिक्षामभ्यर्थये शुभे । ततः सा व्यामृशत्स्मेर--स्मरापस्मारविह्वला ॥ १९ ॥
वशीकरोम्यमुं स्निग्ध--मधुराहारदानतः ॥ स्वादुभोज्यं हि सर्वेषां, वशीकरणमुत्तमम् ॥ २० ॥
ध्यात्वेति सार्पयत्तस्मै, मोदकान् सुन्दरान् बहून् । सोऽपि पर्यटनग्लानः, प्राप्य तान् मुमुदे भृशम् ॥ २१ ॥
पश्यन्ती स्निग्धया दृष्ट्या, सा प्रपच्छेति तं पुनः । युवत्वेऽपि त्वया तीव्रं, किमर्थं व्रतमाददे ॥ २२ ॥
मुनिरूचे मया दीक्षा, जग्रहे सौख्यहेतवे । सुधामधुरया वाचा, ततः सा पुनरब्रवीत् ॥ २३ ॥
यद्येवं तन्मया सार्द्धं, भुङ्क्ष्व वैषयिकं सुखम् । पालिताया इयत्कालं, दीक्षायाः फलमाप्नुहि ॥२४ ॥
कुरूप--दुःस्थ--स्थविर--कर्कशाङ्ग--जनोचिताम् । इमां कष्टक्रियां मुञ्च, मुधा स्वं वञ्चयस्व मा ॥ २५ ॥
इदं गृहमियं लक्ष्मी--रयं परिजनोऽखिलः । सर्वमेतत्तवायत्तं, यदि त्वं स्वीकरोषि माम् ॥ २६ ॥
लावण्याढ्यमिदं रूपं, शरीरं चेदमावयोः । अन्योन्यसङ्गमादद्य, सफलत्वं प्रपद्यताम् ॥ २७ ॥
भवेद्यदि च दीक्षायां, भवतोऽत्यन्तमाग्रहः । भुक्तभोगस्तदा भूयो, वार्द्धके तां समाचरेः ॥ २८ ॥

श्रुत्वेति तद्वचस्तस्याः, विभ्रमांश्च विलोक्य सः । भग्नचित्तोऽभवत्को वा, कामिनीभिर्न भिद्यते ? ॥ २९ ॥
यदुक्तं—"दृष्टाश्चित्रेऽपि चेतांसि, हरन्ति हरिणीदृशः ? । किम्पुनस्ताः स्मितस्मेर–विभ्रमभ्रमितेक्षणाः ? ॥३०॥"
ततः स्वीकृत्य तद्वाच—मवतस्थे स तद्गृहे । तया साकं यथाकामं, रेमे चात्यन्तरक्तया ॥ ३१ ॥
अथ गोचरचर्यायां, वसतौ चाऽरहन्नकम् । अप्रेक्षमाणा मुनयो—ऽन्वेपयन्निखिले पुरे ॥ ३२ ॥
तत्प्रवृत्तिमपि क्वापि, नालभन्त तथाऽपि ते । ततस्तन्मातुरार्याया–स्तं तद्वृत्तान्तमूचिरे ॥ ३३ ॥
वार्त्तां निशम्य तां पुत्र—शोकेनातिगरीयसा । प्रणष्टचित्ता सा भूता–ऽऽविष्टेवोन्मत्ततामगात् ॥ ३४ ॥
ततोऽरहन्नकेत्युच्चै—र्विलपन्ती सगद्गदम् । सा पुरे सकलेऽभ्राम्य–द्वृत्ता चेटकपेटकैः ॥ ३५ ॥
पन्थानमभिषिञ्चन्ती, नयनश्रवदश्रुभिः । तमिस्रेणेव मोहेन, प्रस्खलन्ती पदे पदे ॥ ३६ ॥
दृष्टोऽरहन्नकः क्वापि, पुत्रो मे प्राणवल्लभः ? । यं यं पश्यति तं तं च, पृच्छन्तीति पुनः पुनः ॥ ३७ ॥
कृतानुकम्पा सुजनै—र्हस्यमाना च दुर्जनैः । दृष्टाऽरहन्नकेनोच्चै—र्गवाक्षस्थेन साऽन्यदा ॥३८॥ [त्रिभिर्विशेषकम्]
प्रत्यभिज्ञाय तां प्रेक्ष्य, तदवस्थां च तादृशीम् । स समुत्पन्ननिर्वेदः, स्वहृदीति व्यचिन्तयत् ॥ ३९ ॥
अहो ! मे निर्विवेकत्व—महो ! दुष्कर्मकारिता । यदस्या वचनैस्त्यक्तं, मया मुक्तिप्रदं व्रतम् ॥ ४० ॥
दुस्सहे व्यसने माता, पातितेयमपीदृशे । स्वात्मा च व्रतभङ्गेन, भवाब्धौ पातितो हहा ! ॥ ४१ ॥
इदानीमपि तन्मातुः, शोकमुन्मूलयाम्यहम् । ध्यात्वेति स गृहात्तस्मा—न्निर्जगाम ससम्भ्रमः ॥ ४२ ॥
कुलाङ्गारोपमो मात—रसौ त्वामरहन्नकः । नमतीति ब्रुवन् बाष्प–प्लुताक्षस्तां ननाम च ॥ ४३ ॥

तं वीक्ष्य स्वस्थचित्ता सा, सप्रमोदैवमब्रवीत् । एतावन्ति दिनान्यस्थात्, कुत्र पुत्र! भवानिति ? ॥ ४४ ॥
ततः प्रोवाच स प्राच्यं, सर्वं व्यतिकरं निजम् । तं श्रुत्वा साऽवदद्वत्स !, भूयः स्वीकुरु संयमम् ॥ ४५ ॥
तुच्छानां मर्त्यसौख्याना-मेतेषां हेतवे कृतिन् ! । अनन्तदुःखदा मा स्म—स्वीकार्षीर्नरकव्यथाः ॥ ४६ ॥
सोऽशंसन्नैव शक्तोऽस्मि, पापोऽहं व्रतपालने ! । ततो वदसि चेन्मातः !, करोम्यनशनं तदा ॥ ४७ ॥
तुष्टा भद्राऽभ्यधाद्भद्र !, तवैतदपि साम्प्रतम् । नत्वनन्तभवभ्रान्ति—निमित्तं व्रतभञ्जनम् ॥ ४८ ॥ यदाहुः—
"वरमग्गिम्मि पवेसो, वरं विसुद्धेण कम्मुणा मरणं । मा गहिअव्वयभंगो, मा जीअं खलिअसीलस्स ॥ ४९॥"
ततः स योगं सावद्यं, प्रत्याख्याय महाशयः । क्षमयित्वाऽखिलान् जन्तू-न्निन्दित्वा दुरितं निजम् ॥ ५० ॥
श्रित्वा चत्वारि शरणा—न्यादायाऽनशनं तथा । गत्वा बहिर्दिनेशांशु—तापितामश्रयच्छिलाम् ॥ ५१ ॥ युग्मम्
धर्मध्यानी पादपोपगमनं प्रतिपालयन् । तामुष्णवेदनां सम्यक्, सहमानोऽतिदारुणाम् ॥ ५२ ॥
स साधुः सुकुमाराङ्गः, स्मरन् पञ्च नमस्क्रियाः । व्यलीयत मुहूर्त्तेन, तत्र म्रक्षणपिण्डवत् ॥ ५३ ॥ युग्मम्
इत्थमुष्णमधिसह्य स पश्चा-दत्तनन्दनमुनिस्त्रिदशोऽभूत् । एवमेतदपरैरपि सम्यग्, मर्षणीयमृषिभिर्निरमर्षैः ॥५४॥

इति श्रीमुद्रित-उत्तराध्ययनवृत्तितः उद्धृता

## अरहन्नकमुनिकथा संपूर्णा.

# ४० दंशमशकपरीषहे श्रमणभद्रमुनि कथा

अस्त्यकम्पा पुरी चम्पा–भिधाना भूवि भूपणम् । तस्यां सान्वर्थनामासी--ज्जितशत्रुर्महीपतिः ॥ १ ॥
तस्य श्रमणभद्राह्वः, सूनुः सात्त्विकपुङ्गवः । युवराजोऽजनि जग--ज्जनाह्लादनचन्द्रमाः ॥ २ ॥
धर्मघोपगुरोः पार्श्वे, धर्मं श्रुत्वा जिनोदितम् । विरक्तः कामभोगेभ्यो, महात्मा सोऽग्रहीद्व्रतम् ॥ ३ ॥
श्रुताम्भोनिधिपारीणः, स प्रसादाद्गुरोरभूत् । एकाकित्वविहाराख्यां, प्रतिमां च प्रपन्नवान् ॥ ४ ॥
निम्नभूमिप्रदेशेपु, विहरन् सोऽन्यदा मुनिः । शरत्काले महाटव्यां, तस्थौ प्रतिमया निशि ॥ ५ ॥
सूचीखमानवदना--स्तत्र दंशा सहस्रशः । विलग्य कोमले तस्य, शरीरे शोणितं वपुः ॥ ६ ॥
निरन्तरं विलग्नैस्तै—र्दंशैर्दंशनतत्परैः । स मुनिः स्वर्णवर्णोऽपि, लोहवर्ण इवाऽऽबभौ ॥ ७ ॥
दशत्सु तेपु तस्योच्चै—र्वेदनाऽऽसीत्तथापि सः । तितिक्षामास तां क्षान्ति—क्षमो न तु ममार्ज तान् ॥ ८ ॥
अचिन्तयच्च दंशोत्था, व्यथाऽसौ कियता मम । इतोऽप्यनन्तगुणिता, नरकेपु हि सा भवेत् ॥ ९ ॥
यतः—"परमाधार्मिकोत्पन्ना, मिथोजाः क्षेत्रजास्तथा । नारकाणां व्यथा वक्तुं, पार्यन्ते ज्ञानिनाऽपि न ! ॥ १० ॥
किञ्च–अन्यद्वपुरिदं जीवाज्जीवश्चान्यः शरीरतः । जानन्नपीति को दक्षः, करोति ममतां तनौ ? ॥ ११ ॥
किञ्चानेन शरीरेण, स्वल्पकालविनाशिना । यद्येपां जायते तृप्तिः, किं न प्राप्तं ? तदा मया ॥ १२ ॥
भावयन्निति स प्राज्ञः, क्षममाणश्च तां व्यथाम् । रात्रावेव जहौ प्राणान्, दंशैः शोषितशोणितः ॥ १३ ॥

इति विपद्य स दंशपरीषहं, श्रमणभद्रमुनिस्त्रिदशोऽभवत् । तदपरैरपि साधुवरैरयं, जिनवचो निपुणैः परिषह्यताम् ॥१४॥
इति श्रीमुद्रित-उत्तराध्ययनवृत्तितः उद्धृता

## श्रमणभद्रमुनिकथा संपूर्णा.

## ४१ नैषेधिकीपरीषहे कुरुदत्तमहर्षिकथा

अभूत्पुरे गजपुरे, कुरुदत्तसुताभिधः । महेभ्यपुत्रो महतां, गुणानामेकमास्पदम् ॥ १ ॥
स संविग्नो गुरूपान्ते, प्रव्रज्याधीत्य च श्रुतं । प्रतिपेदेऽन्यदैकाकि—विहारप्रतिमां सुधीः ॥ २ ॥
विहरन्नेकदा सोऽथ, साकेतनगरान्तिके । तस्थौ प्रतिमया तुर्य—पौरुष्यां धैर्यमन्दरः ॥ ३ ॥
ततश्च गोधनं हृत्वा, चौरा ग्रामात्कुतश्चन । कुरुदत्तसुतस्यर्षेः, पार्श्वस्थेनाऽध्वना ययुः ॥ ४ ॥
साधुपार्श्वमथाऽभ्येयु—र्गोधनान्वेषका अपि । द्वौ मार्गौ तत्र दृष्ट्वा ते, पप्रच्छुश्चेति तं मुनिं ॥ ५ ॥
ब्रूहि साधो ! पथा केन, जग्मुश्चौराः सगोधनाः । तच्छ्रुत्वापि मुनिस्तेषां, न ददौ किञ्चिदुत्तरं ॥ ६ ॥
ततस्ते कुपिता वारि—क्लिन्नामादाय मृत्तिकां । मौलौ तस्य मुनेः पालीं, बबन्धुर्दुष्टचेतसः ॥ ७ ॥
तत्र क्षिप्त्वा चिताङ्गारान्, ययुस्ते क्रोधविह्वलाः । मुनिस्तु तैर्ज्वलन्मौलि—रप्येवं हृद्यचिन्तयत् ॥ ८ ॥
'सह कलेवर ! खेदमचिन्तयन्, स्ववशता हि पुनस्तव दुर्लभा ।

बहुतरं च सहिष्यसि जीव हे !, परवशो न च तत्र गुणोऽस्ति ते ॥ ९ ॥'
ध्यायन्निति यतिमौलिं, मनश्चाकम्पयन्नहि । सहित्वा चोपसर्गं तं, परलोकमसाधयत् ॥ १० ॥
नैषेधिक्याः परीषहः, श्रीमुनिराजेन यथाऽमुनाऽधिसेहे । सकलैरपि साधुभिस्तथाऽसौ, सहनीयो महनीयपादपद्मैः ॥११॥

इति श्रीमुद्रित–उत्तराध्ययनवृत्तितः उद्धृता

## श्री कुरुदत्तमहर्षिकथा संपूर्णा.

## ४२ शय्यापरिषहे सोमदत्त–सोमदेवर्षिकथा

बभूव पूर्यां कौशाम्ब्यां, यज्ञदत्ताभिधो द्विजः । तस्याभूतां सोमदत्त–सोमदेवाभिधौ सुतौ ॥ १ ॥
सोमभूतिमुनेः पार्श्वे, तौ द्वावपि महाशयौ । प्राव्राजिष्टां भवोद्विग्ना–वभूतां च बहुश्रुतौ ॥ २ ॥
अन्यदा स्वजनान् द्रष्टुं, तौ कौशाम्बीमुपेयतुः । स्वजनास्तु तदाऽवन्त्यां, गत्वाऽभूवन् स्थितास्तयोः ॥ ३ ॥
ततस्तावप्यचलता–मभिमालवकं मुनी । पिबन्ति तत्र देशे च, मद्यं केचिद्द्विजा अपि ॥ ४ ॥
तत्र ब्राह्मणगेहेषु, भिक्षार्थं गतयोस्तयोः । द्रव्येणान्येन संयोज्य, मद्यं विप्रस्त्रियो ददुः ॥ ५ ॥
अन्ये त्वाहुर्ददे ताभि–र्मद्यमेव यथास्थितम् । तद्विशेषमजानन्ता–वपातां तच्च तावपि ॥ ६ ॥
वपुर्भ्रमादिना सीधुं, पीतं ज्ञात्वाथ तौ मुनी । जाताऽनुतापौ निष्पापौ, मिथो व्यमृशतामिति ॥ ७ ॥

अयुक्तमेतदावाभ्या-मजानद्भ्यां महत्कृतम् । सुरामप्यऽपिबावाऽऽवां, प्रमादादसमीक्ष्य यत् ॥ ८ ॥
सेवेताकल्प्यमप्येव-माहारार्थी कदाचन । तदाहारपरीहार-मेवाऽऽवां कुर्वहेऽधुना ॥ ९ ॥
इत्यालोच्यापगातीर-गतकाष्ठोपरि स्थितौ । तावकार्ष्टां पादपोप-गमनं मुनिसत्तमौ ॥ १० ॥
अकालेऽपि तदा मेघ-वृष्टिर्जज्ञेऽतिभूयसी । पूरयन्ती पयःपुरै-र्नदीं प्लावितसैकतैः ॥ ११ ॥
आरूढश्रमणं दारु, ततारोडुपवत्ततः । उत्तेरतुस्ततो नैव, तदापि व्रतिनौ तु तौ ॥ १२ ॥
सोऽथ सिन्धुरयः कूल-तरून्मूलनतत्परः । काष्ठारूढौ यती सद्य-स्तौ निनाय पयोनिधौ ॥ १३ ॥
उच्छलल्लोलकल्लोल-लोलनान्दोलनव्यथाम् । उल्लोलोत्क्षिप्तकाष्ठौघा-भिघातञ्चातिदारुणम् ॥ १४ ॥
जलजन्तुकृतां ग्रास-विबाधाञ्चातिदुःसहाम् । तत्र धीरमनस्कौ ता-वक्षमेतां क्षमानिधी ॥ १५ ॥ (युग्मम्)
यावज्जीवं विषह्येति, तीव्रं शय्यापरीषहम् । देवभूवं सोमदत्त-सोमदेवावनिन्दिताम् ॥ १६ ॥
तौ साधुसिंहौ सहतः स्म शय्या-परीषहं यद्वदहार्यधैर्यौ । तथा विषह्यो मुनिभिः स सर्वैः, शमामृतक्षीरपयोधिकल्पैः ॥

इति श्रीमुद्रित-उत्तराध्ययनवृत्तित उद्धृता

## सोमदत्त-सोमदेवर्षिकथा संपूर्णा.

## ४३ आक्रोशपरीषहे क्षपककथा.

तथाहि क्वाप्यभूत्कश्चि—दनगारो गुणान्वितः । तपोऽतिदुस्तपं मास—क्षपणादिकमाचरन् ॥ १ ॥
तद्गुणावर्जिता कापि, तं ननामाऽनिशं सुरी । कार्यं मदुचितं पूज्यैः, प्रसाद्यमिति चाब्रवीत् ॥ २ ॥
श्रुत्वा विप्रस्य कस्यापि, दुर्वाक्यं सोऽन्यदा मुनिः । जातकोपः समं तेन, योध्धुं प्रववृतेतराम् ॥ ३ ॥
क्षुत्क्षामदेहः क्षपक—स्ततस्तेन द्विजन्मना । हत्वा मुष्ट्यादिभिः पृथ्व्या—मपात्यत तरस्विना ॥ ४ ॥
मुहुर्मुहुस्ताडयित्वा, द्विजेन मुमुचेऽथ सः । ततः स्वस्थानमगम—त्क्षपकोऽपि कथञ्चन ॥ ५ ॥
तत्पार्श्वेऽथ विभावर्यां, विभाभिर्भासुरी सुरी । समाजगाम:तत्पादौ, प्रणनाम च पूर्ववत् ॥ ६ ॥
तां देवीं जल्पयामास, न किञ्चित्क्षपकः पुनः । अजल्पन्तं च तं साधु—मेवं पप्रच्छ देवता ॥ ७ ॥
त्वं न जल्पयसि स्वामि—न्नपराधात्कुतोऽद्य मां ? । ततो वाचंयमोऽप्युच्चैः, प्रत्युवाचेति निर्जरीम् ॥ ८ ॥
द्विजेन हन्यमानोऽपि, यन्नाहं रक्षितस्त्वया । ममापकारिणस्तस्य, किञ्चिन्नापकृतं च यत् ॥ ९ ॥
ततस्त्वां वादये नाहं, वाङ्मात्रप्रीतिकारिणीम् । तच्छ्रुत्वाऽभ्यधाद्देवी, स्मितविच्छुरिताधरा ॥ १० ॥
युवयोरभवद्युद्धं, यदान्योन्यविलग्नयोः । तदाहमपि तत्रैवा—ऽभूवं कौतुकदर्शिनी ॥ ११ ॥
किन्तु तुल्यौ युवां दृष्टौ, कोपाविष्टौ मया तदा । कः साधुः ? को द्विजश्चेति, नाज्ञासिषमहं तदा ॥ १२ ॥
युष्मद्रक्षां विप्रशिक्षा—मत एव च न व्यधाम् । श्रुत्वेति क्षपकः शान्त—कोपाऽऽटोपोऽब्रवीदिति ॥ १३ ॥

सूनृता प्रेरणा देवि, त्वयाऽसौ विहिता मम । तदमुष्यातिचारस्य, मिथ्यादुष्कृतमस्तु मे ॥ १४ ॥
ततो यतिं तं प्रणिपत्य सत्य—भक्त्या निज धाम जगाम देवी ।
कुप्यन्मुनिः स्यादिति वालतुल्यो, नाक्रोशकारिष्वपि तेन कुप्येत् ॥ १५ ॥

इति श्रीमुद्रित-उत्तराध्ययनवृत्तित उद्धृता

## क्षपककथा संपूर्णा.

## ४४ श्री अर्जुनमालर्षिकथा

अभूत्पुरे राजगृहे, गृहे निःशेषसम्पदाम् । मालाकारोऽर्जुनाह्वानः, स्कन्दश्रीस्तस्य च प्रिया ॥ १ ॥
यक्षो मुद्गरपाण्याह्वः, पुराद्राजगृहाद्बहिः । अर्जुनस्यारामवार्गे—ऽभवत्तद्गोत्रदेवता ॥ २ ॥
कुसुमैर्मेदुरामोद—प्रमोदितजगज्जनैः । तं यक्षमर्जुनो भूरि—भक्त्याऽपूजयदन्वहम् ॥ ३ ॥
स्कन्दश्रीरन्यदा भर्तु—र्भक्तं दत्वा गृहं प्रति । पुष्पाण्यादाय वलिता, यक्षचैत्यान्तिकं ययौ ॥ ४ ॥
तदा च तां दुर्ललित—गोष्ठीसक्ता मदोत्कटाः । यक्षवेश्मस्थिताः प्रेक्षा—मासुः षट् कामिनो नराः ॥ ५ ॥
असौ सौन्दर्यवसति—र्वनिताऽर्जुनमालिनः । गृह्यतामिति जल्पन्तो, द्रुतं ते जगृहुश्च ताम् ॥ ६ ॥
यक्षायतनमध्ये च, तां समानीय कामिनीम् । यक्षस्याग्रे बुभुजिरे, ते सर्वेऽपि पुनः पुनः ॥ ७ ॥

तदा च यक्षपूजार्थं, तत्रागादर्जुनोऽपि हि । तत्रायान्तं विलोक्यैव, स्कन्दश्रीस्तानभाषत ॥ ८ ॥
आगच्छत्यर्जुनोऽसौ तत्किं मां यूयं विमोक्ष्यथ ? । ततस्तेऽचिन्तयन्नून–मेतस्याः प्रियमस्त्यदः ॥ ९ ॥
वराकान्मालिकादस्मा—न्नास्माकं भीरु ! भीरिति । ब्रुवन्तस्ते बबन्धुश्च, द्रुतमर्जुनमालिनम् ॥ १० ॥
तं यक्षस्य पुरो न्यस्य, तस्य पश्यत एव हि । सिषेविरे ते तत्कान्ता–महम्पूर्विकया मुहुः ॥ ११ ॥
स्वभार्यां भुज्यमानां तै–र्वीक्ष्याऽचिन्तयदर्जुनः । एनं यक्षं पुष्पपुञ्जैः पूजयाम्यहमन्वहम् ॥ १२ ॥
अद्य त्वस्यैव पुरतः, प्राप्नोम्येतां विडम्बनाम् । तन्निश्चितमिदं नैव, यक्षः कोप्यत्र विद्यते ॥ १३ ॥
यदि चात्र भवेद्यक्ष—स्तदासौ मां स्वसेवकम् । नैवेदानीमुपेक्षेत, पीड्यमानमनाथवत् ॥ १४ ॥
ध्यायन्तमिति तं ज्ञात्वा, यक्षस्तदनुकम्पया । प्रविवेशाशु तस्याङ्गे—ऽच्छिदत्तद्बन्धनानि च ॥ १५ ॥
सहस्रपलनिष्पन्नं, गृहीत्वा लोहमुद्गरम् । तान्नारीसप्तमान् गोष्ठी–पुरुषान् षट् जघान च ॥ १६ ॥
इत्थं प्रतिदिनं नारी–सप्तमान् मानवान् स षट् । जघान सतताभ्यासा–द्भ्रामं भ्रामं पुराद्बहिः ॥ १७ ॥
तज्ज्ञात्वा पूर्जनः सर्व–स्तावन्न निरगाद्बहिः । यावत्तेन हता न स्युः, षट् नारीसप्तमा नराः ॥ १८ ॥
अन्यदा तत्पुरोपान्ते, श्रीवीरः समवासरत् । न त्वर्जुनभयात्कोऽपि, जिनं नन्तुं ययौ जनः ॥१९॥
तदा तत्पुरवास्तव्यः, श्रुत्वा श्रीमज्जिनागमम् । एवं सुदर्शनः श्रेष्ठी, दध्यौ हर्षोच्छ्वसत्तनुः ॥ २० ॥
अहो ! जगज्जनाम्भोज—प्रबोधननभोमणिम् । श्रीवीरमपि नन्तुं नो, यात्यर्जुनभयाज्जनः ॥ २१ ॥
जिनस्य विश्वत्रितय—त्रायिणो ध्यायिनं जनम् । हन्तुमीष्टे न हीन्द्रोऽपि, तज्जनोऽयं बिभेति किम् ? ॥२२॥

यद्भाव्यं तद्भवतु वा, स्वामिनं किन्तु वन्दितुम्। यास्याम्येवेति स ध्यात्वा, निरगान्नगराद्वहिः ॥ २३ ॥
अर्जुनोऽपि दधावे द्राग्, वीक्ष्यायान्तं सुदर्शनम्। उल्लालयन् मुद्गरं तं, पुष्पकन्दुकलीलया ॥ २४ ॥
तं चापतन्तं वेगेन, धनुर्मुक्तपृषत्कवत्। वीक्ष्येति व्यमृशद्धर्म–स्थैर्यधैर्यैः सुदर्शनः ॥ २५ ॥
अयं मुद्गरपाणिर्मां, हन्तुमायाति मालिकः। तदात्मकृत्यं कुर्वेऽह–मेवं ध्यात्वेति सोऽब्रवीत् ॥ २६ ॥
अर्हत्सिद्धमुनीन् जैनं, धर्मं च जगदुत्तमम्। शरणं प्रतिपन्नोऽस्मि, श्रीवीरं च जगद्गुरुम् ॥ २७ ॥
किञ्चास्मादुपसर्गाच्चेदद्य मोक्षो भवेन्मम। तदा चतुर्विधाहारः, कल्पते नान्यथा पुनः ॥ २८ ॥
इत्थं निगद्य साकारा–ऽनशनं प्रतिपद्य च। स्मरन् पञ्च नमस्कारान्, कायोत्सर्गं चकार सः ॥ २९ ॥
सद्यः सुदर्शनाभ्यर्ण–मायासीदर्जुनोऽप्यथ। नाशकत्तमुपद्रोतुं, किन्तु धर्मप्रभावतः ॥ ३० ॥
ततस्तं परितोऽभ्राम्य–द्वलवानर्जुनोऽधिकम्। शशाक शशकः सिंह–मिव नाक्रमितुं पुनः ॥ ३१ ॥
श्रामं श्राममविश्रामं, यक्षः श्रान्तोऽभवत्ततः। न तु तं द्रष्टुमैशिष्ट, दुर्दृष्टयाऽर्कमुलूकवत् ॥ ३२ ॥
आदाय मुद्गरं मुक्त्वा–ऽर्जुनं यक्षोऽगमत्ततः। अपि देवबलाद्धर्म–बलमेव विशिष्यते ! ॥ ३३ ॥
मुक्तस्तेनार्जुनः पृथ्व्यां, पपात च्छिन्नशाखिवत्। उत्तस्थौ च क्षणादङ्गं मोटयन् गतनिद्रवत् ॥ ३४ ॥
किमकार्षं ? क्व स्थितोऽस्मि ?, का दशा मम विद्यते ? । इति स ज्ञातवान्नैव, निद्रावस्थानुभूतवत् ॥ ३५ ॥
सोऽथाऽप्राक्षीत्स्वस्वरूपं, कृतोत्सर्गं सुदर्शनम्। उपसर्गः शशामेति, सोप्युत्सर्गमपारयत् ॥ ३६ ॥
सर्वं तत्पूर्ववृत्तान्तं, तस्मै सम्यग् जगाद च। तच्छ्रुत्वा जातनिर्वेदो–ऽर्जुनश्चिन्तितवानिति ॥ ३७ ॥

अर्जुनः
लर्षिव

अहो ! अज्ञानिना घोरं, कर्मेदं नरकप्रदम् ! । मया कृतमिति ध्यायन्, सोऽपृच्छदिति तं पुनः ॥३८ ॥
किमर्थं प्रस्थितोसि त्वं ?, ब्रूहि भ्रातः ! सुदर्शन ! । सोऽभ्यधाच्छ्रीमहावीरं, वन्दनार्थं व्रजाम्यहम् ॥ ३९ ॥
तच्छ्रुत्वेत्यर्जुनोऽवादी–द्वन्दितुं परमेश्वरम् । अहमप्यागमिष्यामि, त्वया सह महामते ! ॥ ४० ॥
ततस्तेन समं हृष्टः, श्रीमहावीरसन्निधौ । अगात्सुदर्शनः स्वामि–दर्शनोत्सुकदर्शनः ॥ ४१ ॥
श्रीवर्द्धमानतीर्थेश–पादपद्मौ प्रणम्य तौ । सम्यक् शुश्रुवतुर्धर्म–देशनां क्लेशनाशिनीम् ॥ ४२ ॥
देशनान्ते च सर्वज्ञं, प्रणम्यापृच्छदर्जुनः । स्वामिन् ! कथं विशुद्धिर्मे, भवेद्बहुलपाप्मनः ॥ ४३ ॥
अथोचे भगवांस्त्वं चे–दात्मशुद्धिं चिकीर्षसि । तर्हि संयममादाय, तपस्तप्यस्व दुस्तपम् ॥ ४४ ॥
मलं स्वर्णगतं वह्नि–र्हंसः क्षीरगतं जलम् । यथा पृथक्करोत्येवं, जन्तोः कर्ममलं तपः ॥ ४५ ॥
यथाऽम्बुदा विलीयन्ते, प्रचण्डपवनाऽऽहताः । तथा तीव्रतपोऽपास्ताः, पाप्मानः प्रबला अपि ॥ ४६ ॥
तन्निशम्यार्जुनः स्वामि–समीपे व्रतमाददे । निर्जरार्थं व्यहार्षीच्च, पुरे राजगृहे सदा ॥ ४७ ॥
निरन्तरं षष्ठतपः, कुर्वन् साम्यसुधाम्बुधिः । साध्वाचारं च सकलं, निष्कलङ्कमपालयत् ॥ ४८ ॥
अस्मत्स्वजनहन्ताऽसौ, दुष्टो दुष्कर्मदूषितः । धूर्तो धत्तेऽधुना साधु–वेषं वेषविडम्बकः । ॥ ४९ ॥
इत्याद्यैर्बहुलोकोक्तै–राक्रोशैस्ताडनैस्तथा । स महात्मा न चुक्षोभ, प्रत्युतैवमचिन्तयत् ॥ ५० ॥ (युग्मम्)
"मन्निन्दया यदि जनः परितोषमेति, नन्वप्रयासजनितोऽयमनुग्रहो मे ।
श्रेयोऽर्थिनो हि मनुजाः परतुष्टिहेतो–र्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ ५१ ॥

किञ्च "अक्कोसहणणमारण—धम्मब्भंसाण बालसुलहाणं । लाभं मण्णइ धीरो, जहुत्तराणं अलाभंमि ॥ ५२ ॥
इति ध्यायन् स षण्मासीं, सोढाक्रोशपरीषहः । कृतकर्मक्षयः प्राप, केवलज्ञानमुज्ज्वलम् ॥ ५३ ॥
ततश्चिरं स प्रतिबोध्य भव्यान्, मुक्तिं ययावर्जुनमालिसाधुः। एतद्वदाक्रोशपरीषहोऽन्यै—रपि क्षमाढ्यैः श्रमणैर्विषह्यः ॥५४॥

इति श्रीमुद्रित—उत्तराध्ययनवृत्तितः उद्धृता आक्रोशपरीषहे अर्जुनमालर्षिकथा सम्पूर्णा.

## ४५ वधपरीषहे स्कन्दकाचार्यकथा

अभून्नगर्यां श्रावस्त्यां, जितशत्रुर्महीपतिः । सधर्मचारिणी तस्य, धारिणी संज्ञिकाऽभवत् ॥ १ ॥
गौरीशयोः स्कन्द इव, स्कन्दकोऽभूत्सुतस्तयोः । पुरन्दरसुतादेश्या, पुरन्दरयशाः सुता ॥ २ ॥
तदा दण्डकभूपोऽभू—त्कुम्भकारकृते पुरे । पुरोहितस्तु तस्याऽऽसी—दभव्यः पालकाभिधः ! ॥ ३ ॥
तेन दण्डकिसंज्ञेन, भूभृता भूरिभूतिना । पुरन्दरयशाः कन्या, पितृभ्यां पर्यणायि सा ॥ ४ ॥
अन्यदा सुव्रतस्वामी, भव्याम्भोजनभोऽध्वगः । श्रावस्त्यां समवासार्षी—त्सुरासुरनमस्कृतः ॥ ५ ॥
धन्यंमन्यः स्कन्दकोऽगा—त्तं नन्तुं परमेश्वरम् । श्रुत्वा तद्देशनां श्राद्ध—धर्मंच प्रत्यपद्यत ॥ ६ ॥
पुरोधाः पालकः सोऽथ, कुम्भकारकृतात्पुरात् । केनचिद्राजकार्येण, श्रावस्त्यामन्यदाऽऽययौ ॥ ७ ॥
स च भूपसभामध्ये, कुर्वन्निर्ग्रन्थगर्हणाम् । द्रुतं निरुत्तरीचक्रे स्कन्दकेन महाधिया ॥ ८ ॥

पापः प्राप ततो द्वेषं, पालकः स्कन्दकोपरि। अपकर्तुं पुनः किञ्चि–त्तस्य न प्राभवत्तदा ॥९॥
कृतप्रस्तुतकृत्योऽथ, पालकः स्वास्पदं ययौ। जगाम न तु तच्चिता–त्कोपः स्कन्दकगोचरः ॥ १० ॥
अथ श्रीसुव्रतस्वामि–पादान्ते दान्तमानसः। प्राव्राजीत्स्कन्दकः साकं, मर्त्यानां पञ्चभिः शतैः ॥ ११ ॥
क्रमाद्बहुश्रुते जाते, स्कन्दके सुव्रतप्रभुः। तस्मै शिष्यतया तानि, पञ्च साधुशतान्यदात् ॥ १२ ॥
अन्येद्युः सुव्रतार्हन्तं, स्कन्दकः पृष्टवानिति, व्रजाम्यहं स्वसुर्देश–मादेशः स्याद्यदि प्रभोः ॥ १३ ॥
जगौ जगत्प्रभुस्तत्रो–त्पत्स्यते मारणान्तिकः। सर्वेषामुपसर्गो व–स्तच्छ्रुत्वा स्कन्दकोऽवदत् ॥ १४ ॥
आरधनासाधको हि, नोपसर्गस्तपस्विनाम्। दुःखायते महानन्द–महानन्दाभिलाषिणाम्! ॥ १५ ॥
ततो ब्रूहि प्रभो! तस्मि–न्नुपसर्ग उपस्थिते। आराधका भविष्यामो, वयं यद्वा विराधकाः? ॥ १६ ॥
स्वामी स्माह त्वां विनाऽन्ये, सर्वेप्याराधका इति। स्कन्दकस्तन्निशम्येति, व्यमृशद्भृशमुत्सुकः ॥ १७ ॥
आराधका इयन्तः स्यु–र्विहारे यत्र साधवः। नूनं स शुभ एवेति, विचिन्त्य स्कन्दकोऽचलत् ॥ १८ ॥
क्रमाद्गत्वा कुम्भकार– कृते स सपरिच्छदः। उद्याने समवासार्षी–त्तमश्रौषीच्च पालकः ॥ १९ ॥
ततः प्राग्वैरशुद्ध्यर्थ–मुद्याने तत्र पालकः। प्रच्छन्नं गोपयामास, विविधायुधधोरणीम् ॥ २० ॥
इति दण्डकिराज्ञे चा–ऽपडक्षीणमुवाच सः। जितः परीषहैरत्र, स्कन्दकोऽस्ति समागतः ॥ २१ ॥
अयं स्वयं महावीर्य–श्चण्डदोर्दण्डविक्रमैः। साधुवेषधरैर्युक्तो, भटानां पञ्चभिः शतैः ॥ २२ ॥
उद्याने गोपितैः शस्त्र–प्रकरैरतिदारुणैः। त्वां वन्दितुं गतं हत्वा, राज्यमेतद्ग्रहीष्यति! ॥ २३ ॥ (युग्मम्)

